"समग्रतः कुरुत भरं मदर्पणं
"किमद्य नोऽन्न भाभयं भवेत्परम् ?" ॥ ८५ ॥

द्विजपत्न्य —

अथैकदा तानङ्गनाभोग मध्यासीने भगवति भास्वति वृन्दावनावनौ माधवमध्यासीनं गोपालबालकाः केचन बुभुक्षिताः समभ्येत्यान्नमाचकाङ्क्षुः । "अनतिदूरे सत्रं वितन्वतो विप्रानावयोर्नाम्नाभ्यामोदनं दत्तुध्व"मिति तानादिदेश केशवः । तैश्च तथा कृते, कर्मकाण्डपरायणकर्मठास्ते द्विजाः विहितकर्मेतरव्यावहारिकप्रवृत्तौ उदासीनतया क्षुद्भ्रान्तेभ्य आभीरकुमारेभ्यः सादर-स्वागतं नातन्वंस्तूष्णीमेवातिष्ठन् ।

तदा भग्नाशान् प्रतिनिवृत्तान् घोषकिशोरान् "तथैव भासुर-भूसुर भार्या याचध्वमोदन"मिति पुनः प्रैषयत् कृष्णः । तैरेवं कृते, ताः सांप्रतं चतुर्विध-सव्यञ्जनमन्नं सगुण-भक्ष्य-भोज्य-मादाय चानादृत-पति-सुत-बन्धु-प्रतिबन्धाः कृष्णरामाभ्याशमभ्येत्य प्राज्यप्रीतिपुरःसरं समार्पयन् । प्रीत्यार्पितमुपग्राह्यं प्रीतिपूर्वमुरीकृत्य कृष्णो वयस्यान् भोजयित्वा हलिना-साकं स्वयमपि बुभुजे । एवं पुनरनन्यास्ताद्विजपत्नीभिः सादरं समर्पित-खाद्यन्नादीन् सुभुज्य भक्तपरवशो देवः तासां हृदयकमलेषु स्वात्मानं प्रचुरतरमवभासयन्नभाषतैवम् । "भो धन्यतमाः सुत्विषो भवत्यः, शृणुत, इतः परमपि—

"इमे वृक्षाश्छाया-फल-किसलयैः पुष्पदलास्थ्यादिभिः
"परार्थं जीवन्ति स्वयमपि भृशं वर्ष-हिमैः पीडिताः ।
"तथा यूयं साध्व्यः परहितकृते भूरि कुरुध्वं कृपां
"अयं मुख्यो धर्मो यजनतपसां सारतमो मे प्रियः" ॥ ८६ ॥

इति भाषमाणं कृष्णं द्विजवरजाया दर्शं दर्शं—

हरिं बर्हापीडं वनजकिसलयैर्भूषितं पद्ममाल्यैः
दधानं सख्यंसे करमितरकरेणाधुनानं जलेजम् ।
कटाक्षप्रक्षेपैः सकलजनमनो रञ्जयन्तं सुशोभं
दृशो द्वारा नीत्वा हृदयसरसिजे चक्रिरे सपर्याम् ॥ ८७ ॥

अथानतिचिरेण कृष्णेन क्षोणीगीर्वाणसहधर्मिण्यः स्वपतीन् प्रति यन्तुम् आदिष्टा गाढदुःखिता अवाङ्मुख्यो विमनसः तूष्णीं तस्थुः । परेङ्गितज्ञो भगवान् परमतत्त्वा वोधयामास चेत्थम्—

"सर्वेषामात्माहमिति कलयत क्षोणिदेवेषु चास्मि
"द्वैध्यं नास्त्यस्मिन् जगति समदृशो धर्णधर्मान् श्रयध्वम् ।
"भक्त्या मद्ध्यानाद् हृदयसरसिजे मत्पदं यात यूयं
"देव्यो यातेत्थं निजपतिसुतगेहं चिरं जुष्टचित्ताः ॥ ८८ ॥

"दर्शनाद् कीर्तनाद् वर्णनाद् धारणाद्
"भक्तिपूर्वं सदा मानसे पूजनात् ।
"वीर्यकर्माण्यनुध्यायतो मानवो
"मत्पदं विन्दते यात वो मन्दिरम्" ॥ ८९ ॥

अत्रान्तरे यथावद्विहिताध्वरा द्विजवराः कर्मठाः साङ्गोपाङ्ग-संपूर्ण-प्रवर्तितकर्मकलापा अतिपावनान्तःकरणाः समाप-समाप्त्यामागतान् हुतभुजः स्वर्गीयान् समस्तान् सुस्वागतपूर्वं सुष्ठु समाराधितान् दर्शं दर्शं क्षणदिष्टं सवयस्यं कृष्णमेव पुरुफलदातारं यज्ञपुरुषं पश्यन्तः चकिताः, इतःपूर्वं समापसमाचरणे समागतान् आभीररूपान् देवान् मयज्ञपुरुषान् स्मारं स्मारं भृशमन्वतप्यन्त । "किमिति सुचिरचिरचितगुरुकुलवासा निष्पादिताशेषविद्या धर्ममीमांसाविचक्षणा विततविविधाध्वरा वयं परमपुरुष-

पराङ्मुखा मोहादभूम । अस्मद्योषितस्तु यावत्संस्काररहिता अपि हरिमारेधुः। अत एता धन्यतराः" इति प्रशंसन्तस्ता बहुमेनिरे। तथाच—

भृशमनुतप्य चिरं द्विजा हृदन्त-
र्हरिमनुभावनया सुपूजयन्तः ।
सकलजनार्तिहरे हरौ पुराणे
दृढतरभक्तिमधुर्वधूप्रचारात् ॥ ९० ॥

गच्छतानेहसा भूसुरवरा भासुरतरमतयः हरिभजका भूत्वा क्रमेण गणनीयभक्ताग्रगण्याः परिणेमुः ॥

गोवर्धनः—

*अथ* पाकशासनप्रसादसिद्धये तत्सांवत्सरिक-वरिवस्यां चिकीर्षन् गोवर्धनमहीधरोपकण्ठेऽकुण्ठितप्रयत्नेन संभृत-भूरि-संभारान् आभीरवरान् दृष्ट्वा पुरंदरदर्पकर्तनकामः पुरुषोत्तमस्तान् संबोध्याबोधयदेवम्—

"किमर्थं व्यर्थं भोः शक्रपूजां कुरुध्वे
"स वर्षञ्जीवानां कर्मवारानुरूपम् ।
"सुखं चैषां दुःखं कर्मणा तन्यतेऽत्रे-
"त्यतस्तत्कार्यं किं? कर्मणा सर्वमेतत्" ॥ ९१ ॥

अतो निरर्थकं पुरुहूतहवनं विहाय हविषा तेनैव पुरुसहायभूतानस्माकं भूसुर-गो-गोवर्धनानाराधयध्वमिति कृष्णेनादिष्टेषु घोषपुरुषेषु तथा कुर्वाणेषु कृष्णः—

गोवर्धनशिखरोपरि गिरिदैवतमभव-
च्चाभीरक-सुनिवेदित-बलिमप्यथ बुभुजे ।
गोत्राधरमभितः परिगमनेऽपि च मिलितो
गोवर्धनशिखरेऽपिच युगपच्च स शुशुभे ॥ ९२ ॥

पुरुहूत इदं विलोक्य हि प्रकुपितस्तदानीं
निखिलव्रजगोकुलक्षयेऽह्वयदरं पुरस्तात् ।
पवनान् सभटान् भयंकरान् प्रलयकालमेघान्
कुरुत व्रजनाशमंजसेति सहसा शशास ॥ ९३ ॥

अथाविलंबितमहोरात्रं स्थूणा विशंकटधारासंपातैः शिलाशकल-निष्ठुरैरत्यर्थं प्रहता आभीराः कृष्णं शरण्यं प्राणंसिषुः । तदा—

अङ्गुल्यग्रेण गोत्रं सपदि महरिश्चोद्धरन् हस्तकोटौ
छत्राकं बालको वा द्विरदवरः पुष्पमालां करे वा ।
स्थास्नुर्गोत्रांश्च सप्त प्रचुरलघु तं धारयामास हर्षात्
दर्पान्धानां कुगर्वं प्रशमनमनास्तत्कृतौ सुप्रवीणः ॥ ९४ ॥

गोगोपीगोपाः समन्तास्तदधस्ताच्चस्थिरांसः सुखमनात्सुः—

विबुधपतिरथेदमालोक्य हित्वाऽभिमानं स्वकं
परमपुरुषमेव कृष्णं धरामागतं संस्मरन् ।
प्रलय पवन मेघ संघान् निवार्य प्रह्वनं मुदा
त्रिदश युवति नृत्य वादित्रघोषैर्ननर्त क्षितौ ॥ ९५ ॥

अथ यशोदा-नन्दादिभिरभिष्टूयमानैर्भक्तो निखिल गो-गोपः सह हरिर्व्रजमव्रजत् । अगेपरिष्टपानश्रान्तो विष्टभ्य तिष्ठन् विष्टरश्रवा दभ्र-गोवर्धन-क्षुद्र-क्ष्माधर मक्षतारमात्रमुद्धारेत्यत्र किमु चित्रम्? विस्मितवल्लवा न्प्रति "मन्ये नारायणमम" इति गर्गर्षि-भाषितं स्मृतिपथगतं घ्नन् व्रजपतिर्नन्दः सानन्द नन्दनमभिननन्द ॥

अनन्तर त्रिदशालयाद् गोमाता मत्रा सुत्रामा धरित्रीमागत्य प्राञ्जलोर्नरहरिमनिमात्रमभिएत्य परमपुंसं धन्तार क्षमापयति "भवान्

भू-गो-भूसुरार्याणामिन्द्रो भवतात्" इति प्रार्थयन्, "गोविन्द" इत्यभिदधेऽभिधानं ("गवामिन्द्र" इत्यर्थे) ॥

प्रमोदाद् भूयिष्ठस्नुतसुपयसा दिव्यसुरभिः
गजेन्द्रानीताभिस्त्रिदिवसरिदद्भिश्च मघवा ।
हरेःशीर्षे "गोविन्द" इति विरुदेनाभ्यपिश्चति
किमु स्यात् पर्याप्तस्त्रिभुवनपतेः साधुविरुदः ॥ ९६ ॥

वरुणालयः—

अथैकदा तावदेकादश्यामुपोष्य घोषपति-त्रियामा-तुरीययामात्पूर्वमेव सौरीवाहिनीमवगाहमानो वरुणकिङ्करैर्यादसांपत्युः समीपमनीयत । तस्यादर्शनेन व्रजजनान् ससंभ्रमं भ्रमतः केशवः क्रोशतो निशाम्य करुणालयो वरुणालयं प्रति सत्वरं तत्वरे ॥ तत्र पराध्यर्याभ्यर्हणैरर्हणं विधाय वरुणः "विश्वेश्वर! किं करवै, भृत्यमाज्ञापय" इति सप्रश्रयं प्रार्थयत । तदा तत्रैव तिष्ठन्तं नन्दं तर्जन्या निर्दिश्य, "ममैतं पितरं सांप्रतमानेतुमागतोऽस्मि" इत्युक्तमात्रेण कृष्णाय तं समर्प्य, "मन्मन्तुं क्षन्तुमर्हसि" इति ब्रुवन्नेव प्राज्योपग्राह्यैः संपूज्याभाष्य च, सबहुमानं प्रास्थापयत् ॥ अथ पित्रा सत्रा व्रजं प्राप्य कृष्णः सर्वेषां हर्षप्रकर्षमकार्षीत् ॥ तदनु नन्दो निजनन्दनाय सिन्धुराजकृतप्राग्र्यसपर्यां घोषमानुषेभ्यः सामोदमावेद्य तानवादीदेवम्—

तनुजो न मे न मनुजो दनुजो
दितिजो न जातु न विधिर्न शिवः ।
जगदीश एष परमः पुरुषो
वरुणोऽपि तस्य कुरुते प्रणतीः ॥ ९७ ॥

श्रुत्वा नन्दमुखात्सुतस्य विभवं सर्वेश्वरत्वं च ते
भक्त्या तं बहुमानपूर्वमभजन्नाभीरवर्या मुदा।
जिज्ञासात्वजनि स्वकीयवसतेः स्वानामिति ज्ञातवान्
कृष्णस्तान् यमुनाह्रदे करुणया चाज्ञापयद् गाहितुम् ॥९८॥

शयानं शेषाङ्के सुरमुनिगणैः स्तूयमानं समन्तात्
परैर्ज्योतिःपुञ्जैर्विलसितपदं तार्क्ष्य-शंखारिपद्मैः।
कटाक्षस्मेरास्यं कनकमणिभिः शोभितं नीरदाभं
विरिञ्चि-श्रीकण्ठ-क्षिति-जलधिजाद्योघकण्ठं विकुण्ठम्॥ ९९ ॥

सदानन्दः सुविज्ञो नयनकमले योगनिद्रां वितन्वन्
जगत्यां सर्वजीव-प्रमदकरणे जागरूकः सदाऽऽस्ते।
दयासिन्धुर्भगाढ्यो मृदुलहृदयः शान्तरूपी स शेते
समस्तैश्वर्यजुष्टस्त्रिभुवनपतिः सर्वभूतानुकंपः ॥ १०० ॥

दृष्ट्वा दृष्ट्वा विकुण्ठं परमपुरुषं विस्मितास्तंभितास्ते
धृत्वा धृत्वा सुगाढं हृदयकमले दुर्लभं पुण्यलभ्यम्।
स्मित्वा स्मित्वा चिराय व्रजमपि च ते विस्मरन्तोऽत्र तस्थुः
नत्वा नत्वा च कृष्णं स्वशुभनियतिं चित्रमालां ददुः शम्॥





दर्पं शक्रस्य प्रशमितमकरोद्धृतगोवर्धनो यः
कालीयं सिन्धुं सजनमगमयत्पीतवान् दाववह्निम् ।
आनिन्ये तातं वरुणनिलयतोऽदर्शयत्तान् विकुण्ठं
सुब्रह्मण्योऽस्मै सुपदकृतमदां पुष्पहारं द्वितीयम् ॥१०२॥





परात्परं परद्युतिं सदाशिवं सुमङ्गलं
पुरातनं चिरंतनं चिदात्मकं निरञ्जनम् ।
विराट्छविं परं विभुं मुदात्मकं सुधामयं
सुरार्चितं परेश्वरं स्मराम्यहं दिवानिशम् ॥ १०३ ॥

पुराणपुण्यपूरुषं विनोदमञ्जुभावनं
सुनीलमेघसुन्दरं मुदाविभूतिदायकम् ।
सुनन्दगोपनन्दनं व्रजेशघोषरक्षकं
किशोरकृष्णपुष्करं भजाम्यहं ह्यहर्निशम् ॥ १०४ ॥

वसन्तचन्द्रभास्वरं समस्तलोकशंकरं
किरीटहारभूषितं मुनीन्द्रवृन्दवन्दितम् ।
रथाङ्गशङ्खसंयुतं गदाब्जहस्तवैभवं
विकुण्ठदेवकुञ्जरं नमाम्यहं निरन्तरम् ॥ १०५ ॥

सु. सु.





ततः परं ब्रह्मपरं बृहन्तं
यथा निकायं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारमीशं
तं ज्ञात्वाऽमृतास्ते भवन्ति ॥ (श्वे. 3. 7.)



# कृष्णोल्लासः

## तृतीयमाला

## तरुणोल्लासः

सौरीनटे—

शृङ्गारस्य सुजीविते शशधरे पूर्वाद्रिशृङ्गं गते
गोपानां पुरतोपणे कृतमतिर्वेणुं जगौ माधवः ।
गोपास्तत्क्षणमेव गेहविमुखाः श्रुत्वा ध्वनिं वैणवं
लब्ध्वापोतनसैकतं हृतधियोऽधावंश्च कृष्णान्तिकम् ॥

अथैवं श्रुत्वा वेणुरवं प्रकर्षानन्दाकर्षिताः कात्स्न्र्येन व्रजवासिनो गो-गोपी-गोपास्समस्ता आबालवृद्धा आभीराः केवलं कृष्णाकर्षितचित्ताः कृष्णभावनापरिपूरितमानसाः कृष्णदर्शनलालसाः सद्यस्त्यक्ताखिल-नित्य-नैमित्तिक-कर्मजालाः, सुमधुरता - मधुरित - सुरुचिरतर - मनोहर - शीतांशु - प्रभारञ्जित-दिव्य - शारद - ज्योत्स्ना-राजिते, पुञ्जीकृत - चित्रभानु - लेखा-चित्रिते, शीतभानोः शीतकिरण-प्रसारण-प्रसादन - प्रचुर - प्रतिभा - प्रदीप्ते, इन्दीवरकान्तोड्डराट्-सिञ्चितेन्दुप्रभा-सन्दोह-सौन्दर्ये, सुधाप्लुतेः सुधाप्लावन-संभ्रमाञ्चिते,शोभायमान-शुभ्र-पौर्णिमा-वैभवे, मन्दमारुतादासादितामन्दानन्दतरंगनिकुञ्जे, मन्द्रनिनाद-किलकिलित-सुमधुरतर-मौरीस्वर-गानस्वने, यमुनातीरोपकण्ठशुभसैकते, उत्कटे, मृदुशाद्वलोदारपोतनकेदारे, विविध-सुमनसुमकुसुम-कुड्मल-चितसौरभारम्भगारम्भे, मनोरमतमे,पादपषण्डमण्डल-तले, कृष्णपुष्पकाञ्चित-निकुञ्जपुञ्ज-मन्दारोदारारामे, सुमनोहरे, अशेषा-

ऽऽमोदपारयिष्णुं मानुषवेषधारिणं धरणीधरं विष्णुं जिष्णुं जगन्मोहनं वेणुं रणन्तं नृत्यन्तं कृष्णं समाजग्मुः ॥ तदा इन्दिरारमणपादेन्दीवरसौन्दर्य-सन्दोह-सौरभ्य-संदर्शनेन विस्मृत-सर्व-भावना आनन्दपूरिताः परमपुरुषं कृष्णं परित आनन्दनर्तनं कुर्वन्तः तमेवमभाणिषुः।—

"पृथिव्यामेव समस्तकर्मनिवहं त्यक्त्वा वयं त्वां श्रिताः
"पति-बन्धू-गतिरत्र नः प्रियतमः मर्त्ये त्वमेव प्रभो!।
"प्रति यानेऽच्युत कर्म कर्तुमितरन्नो शक्नुयाम ध्रुवं
"जगति त्वत्प्रणतार्ति-भंजनकृते कृष्णोऽवतीर्णः खलु ॥१०७॥
"तव स्वामिन्! भक्त्या पदसरसिजे सेवमानाः पतामः
"त्वया प्रत्यादत्तं वरमपि वयं सार्थकीकर्तुकामाः।
"अपीच्यं रूपं ते यदि दृशि पतेद् वीर्यकर्माणि कर्णे
"सजीवाः के लोके तव पदयुगं शक्नुयुस्त्यक्तुमद्धा ॥

"तस्मात्करुणार्णव! निजभक्तानां घोषयोषकाणां शीर्षाणि तव चरण-नलिने संनिधत्स्व! अनुगृहाण" इति ॥ इत्थं समस्तत्याग-विशिष्टा-मशेषान्यचिन्तारहितां निर्भरभक्तिभरितां आत्मसमर्पणनिर्णायिकां वाणी-माकर्ण्य, कृष्णो भक्तवत्सलो भगवान्, भृशं प्रसन्नः सर्वाश्रितकामनापूरण-चणो दयापूर्णस्तैः सार्धमलमरमत ॥

रासक्रीडा—

चन्द्रो भैरिव मदकलः परिवृतो यूथेन शर्मप्रदः
कृष्णो यामुन-पुलिन-शाद्वल-तटे रेमे व्रजानां शतैः।
नर्म-प्रेक्षण-हसित-रञ्जित-सुखाश्लेषैः करालोडनैः
नानामोदन नटन-गीत-विहृतैर्मत्तेभविक्रीडितम् ॥ १०९ ॥

एवं सामोदमुदारतरदामोदरेणादृता अभ्यर्थनातिक्रान्ता व्याहृता-लाप-स्वैरविहरणादिभिः प्राप्तापरिमितप्रमदा आभीरा दर्पावलिप्ता बभूवुः।

दर्प-प्रत्यर्थी हि हरिस्तेषां दर्पशमनं प्रथमं कृत्वा ततः प्रमादः कार्य इति निर्णीय गर्व-प्रतिहरणनिपुणः तत्रैवान्तर्दधौ ॥

गोप्यस्तमपश्यन्त्यः समन्तादन्विष्यापि तमलब्ध्वा नितान्त-संभ्रान्त-स्रान्ता भूत्वा—

श्रीकृष्णानुष्ठितास्ता वधविधिततीः पूतना-धेनुकाऽघा-
द्याकल्पान् धारयन्त्यो निपुणमथ ता नाटिका नेटुरेवम् ।
आर्ता गोप्यो हरेस्तान्यनुदिनकृतान्यादरेणानुचक्रः
पृच्छन्त्यो वृक्षवल्लीर्हरिगतस्मृतीर्लेभिरे चित्तशान्तिम् ॥११०॥

एवं वल्लवतल्लजाः कालिन्दीपुलिनतटे कृष्णागमनमेव निरीक्ष्य तमभितुष्टवुरित्थम्—

"दुरितापहन्! भयनाशन! त्रिदशेडिताद्भुतवीर्यवन्!
"पुरुषोत्तम! भवपीडनं क्षपयाशु नो रुचिराननं! ।
"अवतेरिथ व्रजगोकुलेऽखिलकामद! त्वयि भक्तितः
"पुलिनागमस्तव काङ्क्ष्यते पदकिंकरैरत्र नः प्रभो!॥ १११ ॥

"मल्लिकासुममालिकां दधतस्तवागमनं भृशं
"वल्लवाकुलमिच्छति प्रियदर्शनं कुरुतावलम् ।
"तापमाशु निवारय विरज! प्रभो! स्मितमोहन!
"भूतनाथ! मनोहर! प्रणतार्तिहन्! प्रणता वयम् ॥ ११२ ॥

"तवार्थे व्रजकौतुकानपहाय ते शरणं गताः
"कृतस्यापि फलं त्वया दृढसंश्रुतं कृपया मुदा ।
"अतस्त्वं व्रजवासिनो वचमा मर्म परिपालय
"ह्यदाशां परिपश्येत् शरणान्तरं नहि नः प्रभो! ॥११३॥

"पिकचंचु-विपंचिका-कलपंचमे समुदञ्चिते
"मधुलिट्-कृत-सन्तत-श्रुतिपोषिते सुभगंकरे ।
"समदं शिखिनर्तका विततच्छदा नटने रताः
"यमुना सिकताञ्चिते शशिशोभिते पुलिने शुभे ॥ ११४ ॥

"चरणं तव शरणं ध्रुवमिति निश्चितमनसां
"भवपीडनमपनोदय सुषमाजितमदन!
"पुरुषोत्तम! तव सेवक-जनतोपरि दयया
"दूरीकुरु तव पूजनमिहते पदकमले" ॥ ११५ ॥

एवं प्रलापमतिदीनमपूर्वतोच्चैः
कृष्णाय घोषनिजकर्मचयांस्त्यजन्त्यः ।
प्रादुर्बभूव भगवान् स्मयमानवक्त्रः
स्रग्वी सुपीतवसनो मदनस्य मारः ॥ ११६ ॥

सद्यो लब्धात्मव इव, प्रत्यागतचेतना इव, निदाघोद्वेगिन्यः केकिन्यो नवीनासारनिष्यन्दिन्याः कदंबिन्या दर्शनेनेव, कादंबिनीसमानवर्णस्य कृष्णस्य वीक्षणेन भृशमाश्वस्ता आभीराः प्रमदप्रकर्षभरिताः समविकजुष्टाः परुषतापमुज्झुः ॥

तदा बहुनर्तकी-मेलनगीत-नर्तनाश्लेष-लक्षणां रासक्रीडामारभत हरिः स्त्रीरूपाभिरुपनिषद्भिर्गोपरूपैर्वेदैश्च धरणावतीर्णाभिः सुर-मुनि-गणादिभिश्छद्मवेषधारिभिः सार्धम् । तेषां द्वयोर्द्वयोर्मध्ये योगमायया तत्समसंख्याको भूत्वा कृष्णः स्वोभयपार्श्व-जन-कण्ठ-विन्यस्त-हस्तः कुंडलीभूय नर्तनं चकार ॥

रासक्रीडाविलासे प्रचुरकुतुकादन्तरिक्षे सदारा
आसीनाः स्वे विमानेष्वथ सुरगणाश्चकिरे पुष्पवृष्टिम् ।

काञ्चीकेयूरमालावलयचलनैः शिञ्जितं मञ्जु चासीत्
गन्धर्वाः मन्त्रियस्तत्पदकरगतीर्विस्मिता वीक्ष्य तस्थुः॥११७॥

अथ समापन्ने निशोत्सर्गे, निशाकेतोरस्तमनसंभ्रमे, मणिमणिगणा इव खे पुरुशोभायमानागणनीय-भगणचयावृतनिशामणे रमणीयचन्द्र-गोलिकाकाशे प्रभाते, रमणीयरम्यप्रकाशाकाशे, नभोमण्डले, भगनङ्गास्क-रागमनं निरीक्ष्य, जिष्णवे भालवे स्वागतार्हणमर्पणातुराः, पतनास्तमने महगमनक्षमाः, स्वसिद्धभासुग निजतेजसा गगनं भासयन्तः, गमक्रीडा-समाप्तिं सूचयन्त इव, किञ्चिद्-दिष्टं निश्चलास्तस्थुः।

सद्योजागरित-पक्षिगणा मधुरतम-गान - निनाद-कूजत्स्वनोभिर्गगनं पूरयन्तः, सुरुचिर-चित्र-विचित्र-राग-मनोहर-डयमान-पक्षनिकरैः, पक्षरास्त-मन-वेलोचित-ममालाप-संगीत-निर्गपणार्पणक्षमाः, सपदि सद्योजृम्भमाण-प्रभान-भानोम्नरुणारुणकिरणचोदित तरुप-वासरारंभे रंहसा घोरयन्तः, सजोपं प्रकाशाकाशे नृत्यन्तस्तस्थुः॥

पुष्कल-पुष्पित-पुष्पाकराः, पुष्पासार-सौरभैः, फुल्ल-कुड्मलनिरहैः, पुष्पासवाकाङ्क्षि-पुष्पंधय-झंकारनिनदैः, दूराद्वात-शीतल-मन्दवातोद्भूतामोद-प्रहर्ष-प्रकर्षैः, पुष्पोद्गमे मन्दं मन्दं डोलायमान-कम्र-कमनीय निकुञ्जैः, प्राच्यां दिशि महस्रकिरणारुणकिरणसहर्षैः, प्राक्-सन्ध्या बहु शुशुभे॥

तदा तथाऽनुगृहीता व्रजजनाः कृष्णाश्लिष्टकण्ठा आनन्दतुन्दिला-स्त्यक्ताखिलानिष्टाः सुप्रतिष्ठित-प्रत्यक्ष-ब्रह्मनिष्ठा भक्तज्येष्ठा दिव्यामोद-तुष्टाः पुरुषोत्तमानुगृहीत पुष्टा निर्भरनित्यभक्तियुक्तशिष्टा धरणावतीर्ण-गोलोकश्रेष्ठा लोकधर्मप्रेष्ठाः सद्गुणगणरणगरिष्ठाः सज्जनवरिष्ठाः कृष्णा-नुमत्या सुपोदये अनिर्वचनीयां मनसोऽप्यतिदूरां दिव्यां रासक्रीडामिमां समाप्य, सर्वेऽपि पुनरन्मानं परमात्मनि समर्प्य, परमप्रशान्तिमापुः॥

शिवरात्रिः—

अथ महाशिवरात्रि-पुण्यवासरागमे पुण्यक्षेत्रगमने विरूपाक्षसेवायां चोत्कण्ठितास्तीव्रव्रताचरणप्रवणा व्रजवल्लवाः संसृतिदुरितदूरीकरणक्षमायां अंबिकावनक्षमायां मथुरानगरादनतिदूरे वर्तमानमंबिकासमेत त्र्यंबकायतनमनोभिरधिगम्य, निःशेष - किल्बिष - क्षपण - क्षमायां सरस्वतीस्रवन्त्यां स्नात्वा; समस्तदुरितशमनक्षमं निटिललोचनं भूरिवरिवस्याद्रव्यैरभिषेकार्चनादि-सपर्यापर्यायानारचय्य, सकललोकरक्षादीक्षासूत्रं कण्ठबद्ध-मङ्गलसूत्रमिषेण धारयन्तीं जगदंबिकां सम्यङ्नमस्यादिभिराराध्य, धृतोपवासादि-तीव्र-व्रताः सन्तो नामसंकीर्तन-यात्रोत्सवादिभिः त्रियामायामत्रयं जागरणं कृत्वा स्तोकश्रान्ता आसत ॥

तदा शितिकण्ठ-कण्ठभूषण-भूत-वासुकिसंकाशो रमणकद्वीपं प्रहाय पुनः सौरीह्रदं जिगमिषुः कालीय आगच्छन्निव, कश्चन कालकरालकाकोदरः सपदि समुपेत्य, निद्राणं नन्दगोपं न्यगिरत् । तदा समीपस्थ-गोपैरुल्कायष्ट्यादिभिः प्रहतोऽपि जिह्मगस्तं न जगौ । तदा—

हरिरेत्य पदा जघान सर्पं
विजहौ नन्दमसौ मुखात्तदानीम् ।
अहिरूपमथो विहाय सद्यो
वरविद्याधररूपमाप रम्यम् ॥ ११८ ॥

तिलिप्तः सोऽभाषतैवम्—"सुदर्शनाभिधानो विद्याधरोऽहं रुचिररूपसंपत्तिनिमित्ताद् दर्पादवलिप्तो विमानचारिणः कुरूपिण अंगिरसोऽवमेने। तच्छाप-संभूत-भुजंगभावः अद्य त्वत्पदस्पर्शनान्निवृत्तशापोऽस्मि" ।

इति विज्ञाप्य सविनय-विहित-प्रदक्षिण-प्रणामो, धन्यमात्मानं मन्यमानो, माधवेनानुमतः स्वधाम जगाम ॥

तदा—

व्रजजना हरिवैभवमीदृशं
पुरु निरीक्ष्य स-गौरव-विस्मयम्।
सबहुमानपुरःसरमस्तुवन्
व्रतसमापनतो व्रजमाप्नुवन् ॥ ११९ ॥

शङ्खचूड.—

एकदा—

हरिर्भ्रात्रा सत्रा व्रजयुवकगणस्तूयमानप्रभावः
वने रात्रौ तिष्ठन् श्रुतिपथमधुरं मूर्च्छनातो जगौ शम्।
सुशोभास्तन्मुग्धा व्रजवररमणीः शंखचूडोऽपजह्रे
हरिः पश्चाद् धावन् धनपतिमहजं संहरन्नापगोपीः ॥ १२० ॥

अथ शंखचूड-चूडामणिना रमणीशिरोमणिगणेन च सह प्रत्याग-
मद् हरिः।—

शंखचूड-वध-तोषित-योषा-
स्तद्वीक्षण-सुविस्मित-चित्ताः।
कृष्ण-राम-बल-वीर्यमतुल्यं
प्रेक्ष्य तत्र दधिरे दृढभक्तिम् ॥ १२१ ॥

गोपीगीत—

अथ काले गच्छति सति, प्रतिदिनमुषे वृन्दावनान्तर्गते कृष्णे घोषयोषास्तदर्पितधिषणाश्चैराग्रस्कृत-तद्ध्यानास्तत्स्वरूपसौन्दर्य-वीर्यकर्माणि गायन्त्य आसत। तथा च—

व्रजे भ्रूविनत ललित निर्यग्गले मुरलीमजे
स्रगन्माला-तिलकवलय-शार्ङ्गधरे पुरु गायति।
विमानस्थाः सपदि विबुधरामा भवन्ति सुमोहिताः
जनाः स्तब्धा द्रु गिरय इव नद्यो स्तब्धाः पशवः खगाः॥१२२॥

हरिः प्रस्थे तिष्ठन् गणयति पशून् ह्वयन् गणशः क्रमात्
खपुष्पं पाथोदो विकिरति तदाऽऽच्छदव्रजमातपात् ।
प्रदोषे धूलीभिः कलितवदनो विधोः सदृशो लसन्
व्रजस्थानां प्राणान् सममिव वहन् स याति मुदा व्रजम् ॥१२३॥

अरिष्टः—

अथ दिष्टे कस्मिंश्चिद् जगतामरिष्टः सज्जनानामनिष्टोऽरिष्टाख्यासुरः कंसकिङ्करः—

गृहीतवृषभाकृतिः खरखुरैर्धरित्रीं घ्नन्
व्रजं चपलमाविशद् व्रजजनं भृशं भीषयन् ।
कठोरतररंभणैर्भुवनमण्डलं क्षोभयन्
समस्तरिपुकृन्तनक्षमविषाणकुन्तद्वयः ॥ १२४ ॥

तदा भीताऽऽभीरैर्निवेदितो माधवः सपदि प्रतिभटं प्रति मल्लराल्लज इव, करास्फालनेन नियुद्धायाऽऽहूतवान् । तदा—

भुवं विदारयन् खुरैः क्षुभित-रक्त-रूक्षेक्षणो
दृढं खरखुरान् क्षिपन् धरणिमण्डलं क्षोभयन् ।
विषाणनिशिताग्रतः सकलविद्विषां दारण-
क्षमः सपदि दुद्रुवे हरिमभि क्रुधा रंहसा ॥ १२५ ॥

हरिरष्टादश तं पदान्यपगतो गृह्णन् विषाणेऽक्षिपन्
पुनरुत्थाय रुषाऽऽपतन्तमभि गां जग्राह शृङ्गे दृढम् ।
तरसाऽपातयदाशु पादतलतो निष्पेषयन् वस्त्रवत्
जगतोऽरिष्टमनिष्टमप्यपनयन् मत्तेभविक्रीडितम् ॥ १२६ ॥

नारदः—

अथ सुरर्षिवरो नारदो देवकार्यमीप्सन् त्वरयन् भोजपतिमुपगत्या-बोधयदित्थम्—

"कृष्णो देवकीसुत एव। रामो रौहिणेयः। तौ वसुदेव मित्रेण नन्दगोपेन पोष्यमाणौ त्वया प्रेषितान् किंकरान् हतः। जागृहि"। उक्त्वाचैवं नारदो जगाम स्वधाम॥

केशी—

आकर्ण्येदं लपितं नारदीयं
कंसो बद्ध्वा पितरौ केशवस्य।
कारां नीत्वाऽथ तयोः पुत्रहत्यै
व्योमाख्यं केशिनमप्यादिदेश॥ १२७॥

केशी नामक दैत्यदुष्टतुरगः केशवान् केशरीव
शूरः कामगमो रूपोग्रनयनो हेषितैर्भीषयन् गाः।
घोषे धावनतः समस्तमनुजान् प्राणभीतानकार्षीद्
कृष्णो मल्ल इवाऽऽजुहाव गमिते स्फालयन् हस्तयुग्मम्॥ १२८॥

महाहयवपुः सटाविसरयुक् क्षोणीं खुरैर्विघ्नन्
मनोजवयुतो बली व्रजकुलं हेषाभिराकुलयन्।
खुरप्रहरणागतं चरणयोर्धृत्वा हरिर्भ्रमयन्
त्यजन्नथ मुखे क्षिपन्निजभुजं रुन्धन्नसूंस्तमहन्॥ १२९॥

व्योमासुरः—

अथैकदा गोपसुनानो गोवर्धनमानुषु विलायनक्रीडया विहरन्तोऽभूवन्। यत्र चोरवेषधारिणो ग्रहणे पालक-वेषधारिभिर्दण्ड्यन्ते। तत्र

व्योमासुरः पालक-वेषधारी भूत्वा चोरायितान् बहून् गोपबालकान् गिरि-गह्वरे प्रक्षिप्य बृहत्पाषाणैर्द्वारं पिदधे। तदाज्ञाय हरिर्हरिरिव वृकं व्योमासुरमग्रहीत्।—

व्योमासुरं कृष्णकराद्विमोचने
व्यर्थ-प्रयत्नं विवशं भृशार्दितम्।
द्राक् पातयित्वा भुवि पादताडनै-
र्निष्पेषयामास हरिः सुलीलया ॥ १३० ॥

अथ हत्वा व्योमासुरं हरिर्गिरिकन्दराद् व्रजजनानानीय सायं व्रजमव्राजीत्।

मथुरायाम्—

अथ व्योम-केशिनोरपि पञ्चतापत्तिमाविदन् भोजपतिर्नितान्त-चिन्ता-संतानित-स्वान्तो भूत्वा, कंसश्चाणूर-मुष्टिक-शल-तोशलादि मल्ल-राजान् महामात्र-भद्राद्याधोरण-प्रकाण्डांश्चाहूय, माधववधोपाय-चिन्तनं सुचिरं संमन्त्र्य कर्तव्यमित्थं निश्चिकाय—

"धनुर्यागः कार्यो विधिवदिह नः पत्तने सोत्सवो द्राक्
"चतुर्दश्यामुच्चैः प्रचुरविभवैर्दर्शनार्थं जनानाम्।
"स रामः कृष्णोऽत्र व्रजजनयुगानीयतां दर्शनार्थं
"स हन्तव्यो मल्लैस्तु कुवलयापीड-दन्तेन नूनम् ॥ १३१ ॥

मल्लरङ्गस्य परितो मञ्चा वेश्यन्ताम्। पश्यन्तु सर्वे जना नन्दादयश्च कृष्णरामयोरपचितिम् ॥" इत्यभिधाय, चाक्रूरमाहूय, पाणिना तत्पाणिं गृहीत्वा विश्रम्भप्रकर्षमुत्पादयन् रहसि सप्रणयमभाणीदिदम्—

"गत्वा व्रजं सपदि चापमहामहाया-
"याऽऽमन्त्रयस्व सकलानपि नन्दमुख्यान्।

"अक्रूर! मित्रतम! कार्य इहोपकार-
"स्त्वं मदर्थे नियतमानय रामकृष्णौ ॥ १३२ ॥

"तावागतौ दन्तावलतल्लजेन वा मल्लवल्लभैर्वा घातयिष्ये" इति। निशम्येदं भोजपतिभाषितमक्रूरः प्रत्यभाषत तमेवम्—"साधुरेवायमुपायः। कार्यसिद्धिस्तु दैवायत्ता। एवं च तवाज्ञां करोमि" इति ॥

अक्रूरः—

श्वोभूते प्रगे नरपतिरथमारुह्याक्रूरो व्रजाय गच्छन् मध्येमार्गमचिन्तयदेवम्—"अहं कंसप्रेष्योऽपि—

"अहं धन्यो नूनं प्रचुरसुकृतं पूर्वं ह्यकरवं
"यतो मे दैत्यारिर्नयनविषयः कृष्णोऽद्य भविता।
"यदङ्घ्रिद्वन्द्वे श्री-विधि-शचिपतयः शश्वन्नतिपराः
"जगत्याः क्षेमार्थं मनुजवपुषा यः प्रादुरभवत् ॥ १३३ ॥
"कंस-प्रेष्योऽहमिति न दुरितं न मे मनुते हरि-
"स्तातऽऽगच्छेति ननु सकरुणो वदेन्मम सादरम्।
"कच्चिद्रामः कुशलमनुलपेदयं तदचिन्तयन्
"तर्हि प्राज्यं सपदि जनिफलं लभेय सुपुण्यवान्" ॥ १३४ ॥

एवंविध-चिन्ताक्रान्तस्वान्तोऽक्रूरो रजनीमुखे व्रजमासाद्य, तत्र दोहनस्थानादागच्छन्तौ रामकृष्णौ दृष्ट्वा प्राणंसीत्। ताभ्यामालिंगितः सभाजितश्च मधुपर्कादिभिः सत्कृतश्च। व्रजपतिना अनामयं पृष्टः विगतश्रमः यथासुखं सुभक्ष्यभोजनं भुक्त्वा वरासने समुपवेशितः। समीपोपविष्टाभ्यां रामकृष्णाभ्यां वृत्तान्तं पृच्छद्भ्यां यथातथं कथयामास। तदनु नन्दगोपो गोरसाद्युपायनसहिता गोपाः प्रातरनोभिः प्रतिष्ठेरन्निति सांप्रतमाज्ञापयत्।

गोप्यस्तदाकर्ण्य वियोगकातराः
क्रूरोऽयमक्रूर इहाभवद्धि नः ।
पुण्यान्यकार्षुः पुरवासिनो ध्रुवं
द्रक्ष्यन्ति कृष्णं यदमूर्मुदा भृशम् ॥ १३५ ॥

अथ प्रभाते शकटनिविष्ट-घोषजनसहितो रथनिवेशित-केशव-रामोऽक्रूरः प्रतस्थे ॥ तदाससंभ्रमं सोत्कण्ठं वीक्षमाणा व्रजयोषितः कृष्णप्रेषित-वयस्य-मुखेन किंचिदाश्वासिता नयनगोचरपथेऽतीतेऽपि कृष्णे तद्देशदत्त-स्तिमितदृष्टयः शून्यात्मानश्चिरं तस्थुर्घोषेऽतिष्ठन् ॥

हृदे दर्शनम्—

अथ सौरी-स्रवन्तीतीरे पुरुतरुषण्ड-निविष्टस्यन्दनस्थित-रामकृष्णाभ्यामाभाष्याक्रूरः सिष्णासुरप्सु निमग्नस्तावन्तर्ह्रदेऽदर्शदेवम्—

फणीन्द्रं श्वेताभं रजतगिरिमिव स्फारभोगैर्लसन्तं
तदुत्संगेऽदर्शन्नवजलदरुचिं पीतकौशेयचेलम् ।
चतुर्बाहुं सुभ्रून्नसरुचिरमुखं चारुहारं सुशोभं
स्फुरन्नानाभूषं श्रितसुरमुनिभिः स्तूयमानं मुकुन्दम् ॥ १३६ ॥

तत्र संशयितचेतसोन्मज्य तौ यथापूर्वं रथस्थौ दृष्ट्वा पुनर्मज्जन् पूर्ववदीश्वरावद्राक्षीत्सः ॥ तत्र च—

श्री-भू-नीला-समेतं परमपुरुषं सायुधं वीक्षमाणः
ह्यक्रूरो हृष्टरोमा प्रमदभरितो गाढभक्त्या प्रणम्य ।
तुष्टावेत्थं "त्वमाद्यः सकलजगतां भङ्ग-जन्म-स्थितीशः
"सर्वज्ञो विश्वरूपी विविध-यजनैरीड्यमानस्त्वमेकः ॥ १३७ ॥
"क्षेमार्थं जगतां झषादि विविधं रूपं वहन्तं हरिं
"ह्यज्ञात्वा विषयेषु मग्नहृदयो द्वन्द्वेन कृष्ये भृशम् ।

"शैवालावृत-तोयराशिमविदन् मर्त्यो मरुं विन्दते
"नैकट्ये भगवन्तमत्र विसृजन् यातोऽस्मि दूरं मुधा" ॥१३८॥

अथ स्नात्वा रथं प्रत्यागतोऽक्रूरः "किं वृत्तं जलान्तः" इति ताभ्यां पृष्टोऽभाषत—

"ह्रदान्तरहमद्राक्षं वैकुण्ठं शेषशायिनम्।
"युवामवतरन्तौ तौ मन्ये क्ष्मारक्षणे क्षितौ ॥१३९॥
"युवां प्रधानपुरुषौ दुष्टानां निग्रहक्षमौ।
"धन्योऽस्म्यहं कृतज्ञश्च ह्यदीदृशमहं च वाम्" ॥१४०॥

मार्गे हलिहरी वीक्ष्य जनाः प्रापुः परां मुदम्।
रथोऽपि नृपतेः सायं निन्ये तान् मथुरापुरीम् ॥१४१॥

नन्दादयश्च सायं मथुरां प्राप्य पुरोपवने तस्थुः। राम-कृष्णावक्रूरेण निजनिकेतनायाऽऽमन्त्रितौ कार्यसाधनानन्तरं तदाशुश्रुवतुः। अक्रूरो नृपतिं गत्वा तयोरानयनं विज्ञाप्य स्वगृहमगाद् ॥





एवं गोपीश्च गोपानखिलविपदः पालयन् सन्ततं यः
रासक्रीडाविलासैर्निखिलहृदये भूरि मोदं वितेने ।
अक्रूरेणाद्य निन्ये प्रथितमथुरामौग्रसेन्याज्ञया यः
सुब्रह्मण्यो ददेऽस्मै पदसुमकृतां चित्रमालां तृतीयाम् ॥ १४२ ।





क्लींकारांभोधिरत्नं शशिकुलतिलकं वेदवेदान्तसारं
कृष्णं श्रीगोपनाथं श्रुतिशिखरविभुं भास्करं प्रेमरूपम् ।
गोविन्दं गोपकेतुं पुरुसुखभरनं भक्तवात्सल्यमूर्तिं
देवं देदीप्यमानं वसुदलकमले भावयेऽहं वरेण्यम् ॥ १४३ ॥



# कृष्णोल्लासः




## पौरुषोल्लासः





एको वशी सर्वभूतान्तरात्मा
एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरा
स्तेषांसुखं शाश्वतं नेतरेषाम् ॥ (क. 2. 2. 12.)

नित्यो नित्यानां चेतनश्चेतनानां
एको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरा
स्तेषांशान्तिः शाश्वतं नेतरेषाम् ॥ (क. 2. 2. 13.)



# कृष्णोल्लासः



## तुरीयमाला



## पौरुषोल्लासः



मथुरापुर्याम्—

अथ सवयसो हरिर्हलिना साकं मथुरापुरीं तां सायं विशन्—

ददर्श मथुरापुरीं परिघमालहर्म्यैर्वृतां
विशालविपणीततिं विपुलरम्यशृङ्गाटकाम् ।
रसाल-कदलीशिरः-क्रमुक-लाङ्गली-गुच्छकैः
परिष्कृतगृहावलिं सुमफलादि-माल्यांबरैः ॥ १४४ ॥

कृताकृतविभूषणा निजनिशान्तवातायनं
ससंभ्रममुपागता युवतयो हरिं वीक्षितुम् ।
प्रगल्भहसितेक्षणैर्द्विरदविक्रमप्रक्रमै-
र्मनोज्ञवपुषो हरेर्लिखितचित्रतामापिरे ॥ १४५ ॥

ततस्तन्तुवायः कश्चिद्भागधेयोदयादुद्भूतनिर्भर-भक्त्या रमणीय-सिंहसंहननौ रामकृष्णौ सम्यगलंकृत्य दुरवापामाप तदनुग्रहपात्रताम् ।

तदा—

स्वभूः सुदामनाम्नोऽथ मालाकारस्य दिष्टतः ।
गृहं गत्वार्पितं भक्त्या लेभे स्रक्चन्दनादिकम् ॥
स सुष्ठु स्तुवते तस्मै वरदानोन्मुखोऽभवत् ।
तदा सुदामाप्यवदद्वाक्यमत्यर्थभक्तिमान् ॥ १४७ ॥

"भक्तिर्मे तव पाद-पंकजे
"त्वद् भक्तेषु च सौहृदं परम् ।
"कल्याणार्णव ! सर्वदा शिवं
"भूयासुर्भगवन् ! वरेण ते" ॥ १४८ ॥

कुब्जा—

ततो भोजपतेश्चन्दनदासी वक्रत्र्यंगगात्रा त्रिवक्रेति यथार्थनाम्नी कुब्जेति प्रसिद्धा, गन्धपात्रेण सत्रा गच्छन्ती, कृष्णमावीक्ष्य, परमपुरुषं मन्यमाना, भक्तिपूर्वं गन्धं सुंदरसंहननाय ददौ । येन प्रीत्या स्वीकृतेन राम मभिराममालिप्य स्ववपुरपि लिलिपे । ततस्तामनुजिघृक्षुः कृष्णः—

ऋजूकर्तुमनास्तस्याः स्वाङ्गुष्ठौ प्रपदे न्यधात् ।
द्व्यङ्गुली चिबुके दत्वा प्रगृह्योर्ध्वमनीनयत् ॥ १४९ ॥
भगवत्स्पर्शनात्सद्यः साऽभूदृज्वी सुसुन्दरी ।
आह्वयत्सा तदा कृष्णं गेहं भक्तिपरायणा ॥ १५० ॥

"साधितकार्योऽहमागन्तास्मि" इति प्रतिश्रवेण सा दृतकटाक्षवीक्षणेन च ता सान्त्वयित्वा धनुर्मन्दिरमार्गमार्गणस्तदैक्षत । तत्क्षणमेव—

धनुर्भङ्ग—

प्रविश्य धनुषो गृहं वहुभटैः सुगुप्तं धनु-
र्दिदृक्षुरिव निर्भरं निरूटमस्य गत्वा हरिः ।
करेण जगृहे क्षणात्सदनिलीलया तोलयन्
अधिज्यकरणोद्यमे लघु बभञ्ज निर्घोषतः ॥ १५१ ॥

तदा रक्षिकानाततायिनोऽभिपततो रामकृष्णौ चापशकलाभ्यां निहत्य कांश्चिन् कान्दिशीकान् विद्राव्य पुरोपवनं विविशतुः ।

धनुर्भङ्गनिर्ह्रादाकर्णनेन कंसस्त्रास-कंपित-कलेवरोऽभूत् ।

कंसस्तन्निशि गाढभीति-हेतो-
र्निद्रां नाप हि कृष्णमेव पश्यन् ।
सुप्तस्याथ बहूनि दुर्निमित्ता-
न्युत्पद्यास्य समीपमृत्युमूचुः ॥ १५२ ॥

धनुर्याग —

प्रभातायां तु विभावर्यां ससंभ्रमं सरभसमुत्थाय कंसः स्रगादि-समलंकारितमश्चः मञ्चोचितासनोपवेशित-पौरजानपदजनः सत्कारपुरःसरं वरासनोपवेशितराजन्यः स्वसचिव संहति-परिवृत-मण्डलेश्वरमध्ये निहितो-त्तुंगसिंहासनमधिरुह्य तस्थौ । नन्दादयस्तु मञ्चान्त्यप्रान्तेऽविगणिता अतिष्ठन् ॥

क्वणत्पणवघोषतस्तदनु चाणूर-मुष्टिकौ
शलस्तदनु तोशलः प्रमुखमल्लाग्रगामिनः ।
प्रहर्षवदनोत्सुकाः कलितताललानुपक्रमाः
प्रवेशविधिनाविशन् रुचिरभङ्ग्या नटा यथा ॥ १५३ ॥
भद्राद्याश्चोग्रास्तावद्दर्पलिप्ताभिमानिनः ।
चन्द्रलेखाद्ययोदश्वदिन्द्रनीलाचलोपमम् ॥ १५४ ॥
द्विपं कुवलयापीडं रङ्गमुख्यमुखे न्यधुः ।
कृष्णगमौ प्रतीच्छन्तो ह्यकुण्ठोत्कण्ठया स्थिताः ॥ १५५ ॥
आयान्तौ तौ निरीक्ष्यैते न्यरुन्धन्मार्गमंजसा ।
कृष्णो गभीरया वाचा प्राह हस्तिपकांस्तदा ॥ १५६ ॥

"आधोरणा-दत्त-वर्त्म क्षणान्नो
"रङ्गप्रवेशाय वांछास्त्यदभ्रा ।
"यच्छेत मार्गं न नश्येद् वियातान्
"युष्मानिभं चाद्य हन्मीह तूर्णम्" ॥ १५७ ॥

तदा तिरस्कारकारिणा हस्तिपकेन तीक्ष्णतोत्र-तोदित-करिपुष्कर-गृहीत-विग्रहो हरिर्निजकरेण तत्करं समाविद्ध्य निर्मुक्तश्चरणचतुष्टयमध्ये निलीनः पुष्करपरामृष्टो विनिर्गत्य, पुच्छं प्रगृह्य सुपर्णो नागमिव तं नागं सलीलं सुदूरं विकृष्य, भ्रमयित्वा विसृज्य, स्वयमपि पतित इव नटन्, सहसोत्थायापययौ। तं पतितं मत्वा दन्तावलतल्लजो दन्ताभ्यां वसुधां मुधा विव्याध। अथ माधवः—

क्रुद्धं दन्तिनमापतन्तमधुना हस्ते निगृह्य क्षणात्
क्षोण्यामक्षिपदंघ्रिणाच्च सुभृशं चाक्रम्य संपीड्य तम् ।
उत्पाट्यास्य रदं स तेन तमहन्नाधोरणांश्च द्रुतं
कृष्ट्वान्यं रदनं बलाय तमदात् शार्दूलविक्रीडितम् ॥ १५८ ॥

अथ स्कन्धदेशनिवेशित दन्तावलदन्तायुधौ माधव-प्रलंबघ्नौ वयस्यैः सह रङ्गाङ्गणं विविशतुः—

नानाविधाकलितवेषविशेषयुक्ता-
वंसोद्धृत-द्विरद-दन्त-समद्युधानौ ।
दृष्ट्वा जनाः कुतुकिनः प्रथित-प्रभावौ
चित्राणि वीर्यचरितानि मिथः समूदुः ॥ १५९ ॥

अथ मल्लप्रधानचाणूरो रामकृष्णौ सबहुमानं संबोध्य, राजप्रियचिकीर्षामिषेण नियुद्धाय तावामन्त्र्य, स्वात्मानं कृष्णाय, मुष्टिकं रामाय च

प्रतिद्वन्द्वमकल्पयत् । रामकृष्णौ च "भोजपतेरिष्टमावयोरभीष्टमेव" इति प्रतिवदन्तौ तन्नियुद्धमुररीचक्रतुः ॥ तदा प्रतिद्वन्द्विद्वन्द्वं हस्ताहस्ति मुष्टीमुष्टि द्वन्द्वयुद्धमारेभाते । तथाच—

करास्फोटनमादितः परिवर्तनं ग्रहणं मिथः
विसृज्याप्युपसर्पणं प्रतिरोधनं करतोलनम् ।
पतित्वाप्यभिलुंठनं स्वपसर्पणं ग्रहणं पुनः
समक्षेपणमन्ततो कटु योधनं द्रुम्नर्तनम् ॥ १६० ॥

एवं चिरदिष्टं नितान्तक्रोधाक्रान्तस्वान्तेन स्वत्यर्थकठोरमीषणं नियुध्यमान-प्रतिद्वन्द्विद्वन्द्वं वीक्षमाणा योषाः कृष्णरामकृतेऽनुकंपातिशयेन समुत्पद्यमानाश्रुधाराः स्रावयन्त्यो मिथोऽवदन्नेवम्—

"महानधर्मो भविता नियुद्धे
"द्वन्द्व-प्रतिद्वन्द्व-ममत्व-शून्ये ।
"क पर्वताकार-बलिष्ठ-मल्लौ
"क्वैतौ कुमारौ पुरुकोमलाङ्गौ?" ॥ १६१ ॥

"पश्यत श्रमस्वेदकणान् कृष्णस्य मुखे कमले हिमविन्दूनिव, वीक्षध्वं बलभद्र-वदनमारक्तं कोकनदमिव" ॥ इति—

युवतिजनस्य वचांसि निशम्य
स्वजनमनः-परिताप-भयेन ।
प्रतिभटमल्लवधे मतिमुग्रां
सपदि हरिर्निदधेऽथ मृधेऽस्मिन् ॥ १६२ ॥

चाणूराङ्गमपीडयद् दृढतरं वज्रोपमाङ्गैर्हरिः
क्रोधात्तेन च मुष्टिपुग्मनिहतो हस्तीव पुष्पैर्हतः ।

तं बाह्वोः सुनिगृह्य गाढमभ्रकचक्राकृतिं भ्रामयन्
क्षिप्त्वा क्षोणितले हठात्समहरत् शार्दूलविक्रीडितम् ॥ १६३ ॥

संक्रुद्धो बलवक्षसि प्रहृतवान् मुष्टिको वज्रमुष्ट्या
तन्निर्लक्ष्य हली करप्रहरणैर्मुष्टिकं द्राक् निहत्य ।
वात्याविद्धमहामहीरुहमिवापातयत्क्षोणिपृष्ठे
कूटं पाणितलाहतं समहरद् द्वीपिविक्रीडितं द्राक् ॥ १६४ ॥

शलं तदनु तोशलं हरिरहन्वरं लीलया
पलायनमकुर्वत प्रचुरकान्दिशीकास्तदा ।
अथ स्वजनसंगतश्चतुरवल्गनं दर्शयन्
स्वकिंकिणि-मणिक्वणैरनुससार तालक्रमम् ॥ १६५ ॥

अथ स्वमनोरथविलासवैपरीत्येन भुज-कर्कश-शिखरि-प्रख्यानां वज्रकायमल्लमल्लजानां प्रमथन-दर्शनाद्विनान्तवान्तो भीतिविभिन्नपान्तो भोजपतिः सामन्तराजामात्य-प्रतीत-प्रजापूर्ण-सभायां गोपालबालकाभ्या-मत्यन्तमात्मानमवमानितं मन्यमानोऽत्र किंकर्तव्यतामूढो विलक्षणो वाचानि विनार्याऽर्थगतप्राणो भटानाज्ञापयदेवम्—

"अयि भटपुङ्गवा इमौ दुष्टौ
"प्रचुरमविनयं प्रकुर्वाते ।
"सपदि नगरतो बहिरिमं
"नयत पुनरिहान माऽऽनयताम् ॥ १६६ ॥

"वसुदेवं हत शीघ्रमेव पापं
"हत नन्दं स्वजनैः सहोग्रसेनम् ।
"परुषं हृदि धारयन्त एते
"रिपवो मे यममन्दिरं प्रयान्तु" ॥ १६७ ॥

वचोऽपि निशमन्निदं सपदि दुष्टपृथ्वीश्वरं
सखड्ग-नृपमग्रहीच्छिरसि चोरगं तार्क्ष्यवत् ।
हठात्क्षितितले क्षिपन् तमधि चापतद्विश्वधृक्
चकर्ष सहसा व्यसुं हरिरिभं यथा तं हरिः ॥ १६८ ॥

स सर्वदोद्विग्नधिया यमीश्वरं
पिबन् वदन् वा विचरन् स्वपन् श्वमन् ।
ददर्श कंसोऽरिकरं हरिं सदा
तमेव सद्यो दुरवापमाप सः ॥ १६९ ॥

ततस्तदनुजा वैरनिर्यातचिकीर्षवः कंक - न्यग्रोधकादयोऽष्टौ हरिमभिपेतुः । ते च पशव इव पश्वास्येन, प्रलंबघ्नेन परिघेण पञ्चतामापिरे ।

तदा—

मुदिता विबुधाः सुमं किरन्तो
विजहुर्मानसखेदमद्य गाढम् ।
दिविजा गणिका जगुर्मनोज्ञाः
समभूद् भेरि-मृदंग-तूर्य-घोषः ॥ १७० ॥

एवं प्रध्वंसं गते नृशंसे कंसे, कंकादिसहजसमुदये शमनसदनं समासादिते, स्वप्राणरक्षणप्रवणेषु क्षोणिपेषु क्षणेन परोक्षभावं गतेषु—

"पितृद्रोहिणि स्वजनद्वेषिणि सज्जनघातिनि सत्कर्मविरोधिनि राजनि विधिविहितेयं समुचित चरमदशा" इत्यादिभिर्मिथोरहोवचोभिः सह मल्लनियुद्धक्षणनिरीक्षणकांक्षणप्रवणैः रिक्तीक्रियमाणेषु मञ्चसञ्चयेषु

कलकलनिनद-मुखरिते रङ्गहरिन्मुखे रणाङ्गणीभूते चावरोध-वधूजनारब्धातिदीन-परिदेवनव्याप्ते शून्य-नृपसभे गोपजनमालावशेषिते, कंसारिः कृष्णः धरित्रीपतेरुत्तरक्रियाः कारयित्वा, सरामः सत्वरं कारां गत्वा पितरौ लोहशृंखलबन्धनान्मोचयित्वाऽवन्दिष्ट। तदा रामकृष्णौ जगदीश्वराविति मन्वानौ देवकीवसुदेवौ यावत्तौ परिष्वजेते तावज्जगन्मोहिनीं विष्णुमायां वितत्य कृष्णस्तावभापतैवम्—

"न पीथो दत्तो वामुपयमनजोपं हि भुवने
"यदा कारागारे व्यसनितवतौ पुत्रविरहात्।
"विथोः कृत्यं भ्रातुर्भयकलुपितं दौष्ट्यचरितं
"अतः शीलं सौख्यं परम लभतं गाढ-पितरौ" ॥ १७१ ॥

इत्थं भाषमाणं कृष्णं सरामं गाढतममाश्लिष्य वाष्पासारैरभिषिच्य, चानन्दसिन्धौ नितरां ममज्जतुर्जंपती ॥

तदा मोचयित्वा चोग्रसेनं यथापुरं मथुरापुरे नरपतिपदे निदधे माधवः। तदनु कंसत्रासात्कृत-विदेशप्रवासान वृष्ण्यन्धकमधूनत्र प्रत्यागमय्य निजनिजनिकेतनेषु सुखावासायाऽऽदिदेश केशवः। अनन्तरम्—

नन्दादि-व्रज-मित्र-बन्धु-निवहं संगम्य मोदावहः
संभाष्य स्वकृतज्ञतां बहु वदन् आलिंग्य गाढं वपुः।
वस्त्रादीन्नृपदौकनानि वितरिष्याम्यामि लब्धान्तरे
चेत्याभाष्य व्रजाय गन्तुमनसां प्रेम्णाऽनुमेने हरिः॥१७२॥

अथाऽऽनकदुन्दुभिः मुनिपुंगवं गर्गर्षिऋषभं कुलपुरोधसं पुरोधाय भासुरभूसुरैरथ रामकृष्णौ द्विजन्यजनककर्मणा संस्कार्य—

विद्याभ्यासाय पुत्रौ गुरुकुलवरे प्रेपितोऽस्मौ सुवंशः
प्राज्ञौ सान्दीपिनीतो निशितधिषणौ छात्रवर्गेण सत्रा ।
साङ्गोपाङ्गांश्च वेदान् बहुविधकलाः कृत्स्नशोऽधीतवन्तौ
सूनोर्दानं परमोद्दिरिमथ गुरुर्दक्षिणार्थं ययाचे ॥ १७३ ॥

तदा सरथौ हलिहरी आप्तप्रभासौ प्रचेतसो ननमाऽऽशंकितोदरपुत्रं पंचजनाख्यासुरं शंखरूपं पंनतां नीत्वा पांचजन्यं शंखं लेभाते, नतु गुरुपुत्रम् । अथ—

हरिः मगमोऽथ यमस्य गेहं
गत्वा मुदा तेन कृतां सपर्याम् ।
स्वीकृत्य पुत्रेण गुरोः समेत्य
स्वदक्षिणार्थं गुरवे ददौ तम् ॥ १७४ ॥

तदा गुरुः सभार्यः प्राप्तातिमात्रप्रीतिप्रकर्षो हृदयंगमाभिराशीर्भिः सह स्वसदनगमनमन्वमंस्त । तदनु मथुरापुरीमागतौ रामकृष्णौ सुचिर-विरहखेदं बान्धवानामपनिन्यतुस्तौ ।

ततो हरिः प्रेष्ठं भक्तसत्तममुद्धवमाहूय तमित्थमादिदेश —

"गत्वा गोकुलमुद्धव प्रियसखे पित्रोर्मुदं कारय
"प्रीतिं गोकुलवासिनां च सकलां वार्तां वदन्मामह ।
"या गोप्यो निखिलं जहुर्मम कृते जीवन्ति मत्प्रीतये
"ता भक्त्या बहु सान्त्वयन् विरहजं दुःखं हर प्रेमतः" ॥१७५॥

उद्धवश्च गृहीत-विविधोपग्राह्यः सत्वरं रथमारुह्य, रजनीमुखे व्रजं प्राप्य, नन्देन सत्कृतः, श्वोभूते प्रातर्गोपीनां गोपानां च दृष्टि-पथमधिजगाम ।

गोप्यः समीक्ष्य पुरुषं हरिभक्तवर्यं
पीतांबरं कुसुमहारजुषं सुवेषम् ।
संबोध्य भृङ्गमथ तं वदतीव काचिन्-
मा नः स्पृश प्रतरणेन वयं विनष्टाः ॥ १७६ ॥

अथोद्धवो भगवत्सन्देशं ताभ्यो जगादेत्थम् ।—

"कृष्ण उवाचैवम्—
"यथाकाशो वायौ सततमनुगोऽहं च सर्वेषु वर्ते
"जगत्सृष्ट्वा मत्तस्तदनुविशतः कुत्र मे स्याद्वियोगः ? ।
"चिदात्मानो नित्या जगति विषयास्त्वस्थिराः स्वप्नतुल्याः
"इतीक्षित्वा यूयं मयि धृतधियो मत्पदं प्राप्स्यथान्ते"॥१७७॥

तदा—
आकर्ण्येमां भारतीं माधवीयां
प्रीत्या गोप्यश्चित्तशान्तिं समापुः ।
कृष्णं चित्ते धारयन्त्यः सुगाढं
प्राज्यां भक्तिं तत्पदे लेभिरे ताः ॥ १७८ ॥

उद्धवस्तावद्व्रजे कतिपयमासान् वसन्, नित्यं निरंतरं कृष्णकथा व्रजवल्लवीभ्यः शृण्वन्, तासां परां भक्तिं प्रशंसन्, प्रश्रयप्रणतिपुरःसरं ताः सभाजयन्, भक्त्या संदुधुक्षे । एवम्—

भव-भीतमुनीनां यत्तीव्रेण तपसेप्सितम् ।
गोप्यो भूयिष्ठ-भक्त्यैव लभन्ते सुलभेन तत् ॥ १७९ ॥

अथ मथुरां प्रतिनिवर्तितुकाममुद्धवं नन्दगोपादिगोपप्रमुखा बहुभि-रुपढौकनैः संमान्य कृष्णरामवसुदेवादिभ्यो भूयिष्ठमुपायनं दत्वा

सन्देशैः साकं प्रेषयामासुः। अथोद्धवः स्वपत्तनमागत्य कृष्णाय वृत्त-मखिलं निवेद्याऽतोषयत्।

अक्रूरगृहे—

अन्येद्युरच्युतोऽक्रूराय कृतमाश्रवं स्मरन्, रामोद्धवाभ्यां सार्धं तदगार-मागम्य,मिथोऽभिवादन-स्वागतावेदनानन्तरं वरासने समुपवेशितः सभाजितः समुचितातिथ्यैः सम्यगभ्यर्हितोऽक्रूरेणैवमस्तावि—

"युवां दुष्टप्रशमनपरौ सतां परिपालकौ
"तथा सर्व-प्रभवभरणाप्ययं युवयोः कृतिः।
"जगत्यां सृष्टिमनुविशतः स्वयं हि बुभूषया
"युवाभ्यां किंचिदपि न पृथग्भवेन्नु कदाचन ॥ १८० ॥

"त्वमेव बहुधा भासि ह्यवश्यो गुणकर्मणोः।
"सर्वज्ञः सर्वशक्तस्त्वं त्वत्समो न कुतोऽधिकः? ॥ १८१ ॥
"चेतना ज्ञास्त्वमेवांशाश्चान्तर्याम्यसि तेषु वै।
"धर्मग्लानौ क्षिताविथं वपुषाऽवतरस्यज" ॥ १८२ ॥

कृष्णो भगवान् मन्दस्मितेनानुमोदिततज्ज्ञापितोऽभाषतैवम्—"त्वं पितृव्यो वरीयांश्च। आवां बालकौ, त्वत्पोष्यौ त्वयानुग्राह्यौ च। आस्तां तावत्। त्वयापि कार्यं किंचिदस्ति।

हस्त्याह्वये पाण्डुसुतांश्च कौरवान्
दृष्ट्वा त्वमागच्छ विदंश्च तत्स्थितिम्।
ते पाण्डवाः कौरवदुष्कृतार्दिता
इत्यादि वार्ता हि शृणोमि सांप्रतम् ॥ १८३ ॥

तदा चाक्रूरो हस्तिनापुरं गत्वा, पृथां विदुरं च दृष्ट्वा, चाभाष्य, सुगुण-यशोवृद्धिं पाण्डवानामसहमानैः कौरवैः पाण्डवा भोजितगरला

जतुगृहाद्विप्रवासितास्तथापि दैवानुकूल्यबलेन क्षेमेण वर्तन्त इति ज्ञात्वा भीष्मद्रोणादिभिः सह संबभाषे। अथ धृतराष्ट्रं दृष्ट्वा—

तं धर्ममब्रवीत् सुष्ठु श्लाघितः प्रतिबोधितः।
"वात्सल्यात् पुत्रवश्योऽहं कृष्णो रक्षतु सज्जनान्॥ १८४॥

"धर्मप्रतिष्ठापनार्थमवतीर्णो हि कृष्णः। स समीचीनं कृत्वा लोकानुद्धरतात्" इति। धृतराष्ट्र-भाषितं श्रुत्वा किंचिद्दिष्टं हस्त्याह्वये चोषित्वा, मथुरां प्रत्यागत्य, कृष्णायाशेषोदन्तमावेदयत् सोऽक्रूरः॥





लोकानां क्षेमकृत्यप्रवणहृदयो दुष्टसंहारदक्षो
लीलामर्त्यस्वरूपं हरिरिह बहलौग्रसेनिं जघान ।
धर्मिष्ठं चोग्रसेनं नरपतिपदे स्थापयच्चाथ तस्मै
सुब्रह्मण्यस्तुरीयां पदसुमकृतामर्पये चित्रमालाम् ॥ १८५ ॥





फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोगोपसंघावृतं
गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजे ॥ १८६ ॥

कस्तूरीतिलकं ललाटफलके वक्षस्थले कौस्तुभं
नासाग्रे वरमौक्तिकं करतले वेणुं करे कङ्कणम् ।
सर्वाङ्गे हरिचन्दनं च कलयन् कंठे च मुक्तावलिं
गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥ १८७ ॥

( श्रीसम्मोहनतन्त्रम् )





हंसः शुचिषद्वसुरन्तरिक्षसद्धोता
वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा
गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ (म ना 16 8.)



# कृष्णोल्लासः



पंचमी माला



## परिणयोल्लासः



जरासन्ध —

अस्ति प्राप्तीति पुत्र्यौ द्वे कंसनाशात्सुदुःखिते ।
जरासन्धो गृहे पश्यन् चुकोप हरये भृशम् ॥

मगधाधिपो जरासन्धो नितान्तक्रोधाक्रान्तस्वान्तः सन् अक्षौहिणीनां त्रयोविंशत्या सार्कं—

महासमरयोधनेऽप्रतिभटः पराक्रमकः
सहस्रगजशक्तिमान् मगधदेशभूपासुरः ।
असंख्य-भटसंयुतः स हरये क्रुधा-पूरितः
रुरोध मथुरापुरीं सपदि तत्समन्ताद् भृशम् ॥ १८०. ॥

तदा भगवदिच्छया वैकुण्ठादागतं शैव्य-सुग्रीव मेघपुष्प-बलाहकाख्य-हय-चतुष्टय-युक्तं दारुकाख्य-सारथि-चोदितं सकलायुध-संपन्नं गरुडध्वजं दिव्यरथारं गरुडध्वजः सरामः समारुह्य, शत्रुसैन्याग्रे गत्वा पांचजन्याख्यं शंखं दध्मौ । तेन शंखध्मानेन रिपुबलमखिलमतिवेलं प्रक्षोभितं बभूव । तदा "बालकेन मातुलघातिना न योत्स्ये" इति वदन्, कृष्णं निःसार्य, मागधो राममाहवायाऽऽहूय, घोरतरसमरमारभमाणो रामकृष्णयो रथं स्वसैन्याऽऽच्छन्नमकार्षीत् ।

हरिः सैन्यं पश्यन् रिपुबलशरैः पीडितं शार्ङ्गधन्वा
प्रकुर्वन् ज्याघोषं निशितविशिखैः शत्रुसेनामभाङ्क्षीत् ।
निपेतुः प्रच्छिन्नाः पदग-तुरगा दन्तिनो युद्धरङ्गे
जरासन्धं गृह्णन् झटिति मुसली पाशबन्धं बबन्ध ॥ १९० ॥

तदनु कृष्णगिरा विसृजन् रिपुं
विजयभेरि-मृदङ्ग-निनादतः ।
युवतिवृन्द-विकीर्ण-सुमो हली
स्वनगरीं प्रविवेश सकेशवः ॥ १९१ ॥

कालयवन.—

करालः कालयवनो वज्रकायो यमोपमः ।
अलब्ध्वा स्वप्रतिद्वन्द्वं रणकण्डूलबाहुभृत् ॥ १९२ ॥
स विद्नारदगिरा चाणूरघ्नो हरिः क्षमः ।
कोटिसैन्यसमायुक्तो न्यरुणन्मथुरापुरीम् ॥ १९३ ॥

द्वारका—

तदवलोक्य कृष्णः पौराबला-बाल-वृद्ध-क्षेमाय द्वादशयोजन-विस्तीर्णाममरावतीप्रत्यादेशां वापीकूपतटाकोपवनोपेताम्—

पयोदसरणिस्पृशत्कनककुंभकूटैर्गृहै-
र्विशालरथवीथिभिः परिख-गोपुराट्टालकैः ।
पुरीं भृशमलंकृतां सपदि नामतो द्वारकां
अरातिबलदुर्गमां जलनिधौ हरिर्निर्ममे ॥ १९४ ॥

यस्यां च दिगधिपतयो निजनिजविभवानिदधुः। योगमायया हरिः पौरान् सपरिकरान् द्वारकामानीय, तद्रक्षार्थं रौहिणेयं नियोज्य, स्वयं निरायुध आजानुलंबमान-प्रालंबिकमालभारी मथुरया निर्गम्य पुरनाग्रे प्रादुरासीत् ।

तदनु माधवो धावन्ननुधावन्तं कालयवनं किंचन गिरिगह्वरं नीत्वा तत्रैवान्तर्दधे। यस्मिन् मुचुकुन्दो नाम मिहिरवंशीय विश्रुत विश्रान्तः प्रत्ननृपो सुरसमरे पुरंदरसहायो भूत्वा चान्ते नितान्त-परिश्रान्तो भूत्वा, चिरनिद्रेप्सुः, "निद्राभङ्गकारी सद्यो भस्मसाद्भव-त्वि"ति जंभभेदि-दत्तवरोऽत्र बहुकालान्निद्राणः शेते। तदविजानन् कालयवनो गुहां प्रविश्य शयानं केशवं मत्वा चरणाग्रेण निर्णिद्रीकुर्वाण-स्तत्क्षणमेव विदग्धो बभूव॥

मुचुकुन्द —

*अथ हरिराविरासीत्। तदा—*

दृष्ट्वाग्रतोऽथ मुचुकुन्दनृपो मुकुन्दं<br>
"किं पूर्वजन्म-सुकृतं सुकृतं मया यत्।<br>
"पश्याम्यनुग्रहचिकीर्षुमिहागतं त्वां"<br>
एवंविधाः प्रणतिपूर्वनुतीरतानीत्॥ १९५॥

अथाऽऽगामिजन्मनि मुक्तिमुक्त्वा मुकुन्दोऽन्तर्दधे। मुचुकुन्दस्तदनु स्वराज्योद्देशं प्रतिगत्वा तत्र कलत्र पुत्र-मन्त्रिणश्चिरदिष्टात् कालवशं गतान् विदन्, मानुषवपुषामल्पत्वादिना तर्कितकलिकालागमो, गन्धमादननगं गत्वा, नारायणाश्रमाभ्याशे निशित तपसि तस्थौ॥

प्रहर्षणगिरि —

अथ यवनवाहिनीं जवेन विदलयन् तद्धनं स्वपत्तनं नयन् माधवो मध्येमार्गं मागधं महतानीकेनाभिपतन्तं निशाम्य त्रस्त इव त्यक्तधनः संप्रति मिलितप्रलंबघ्नः प्रहर्षणाख्य शिखरिणमारुक्षत्। मागधस्तावनु-धावन् क्षितिभृतमभितो हुतवहमसृजत्। हलिहरी प्रहर्षणादवप्लुत्य द्वारकामाजग्मतुः। मागधस्तौ दग्धौ मत्वाममोदं स्वपुरमगमत्॥

रेवती—

आनर्ताधिपतिः शर्यातिपौत्रः ककुद्मीनामा स्वकीयां तनयां रेवती-नाम्नीमादाय सत्यलोकं गत्वा समुचितवरं तस्याः चतुर्मुखमप्राक्षीत्। द्रुहिणः सजोषमाह तमेवम्—

"यदा त्वं पृथिवीं यासि भवेत्तत्र युगान्तरम्।
रामाय रौहिणेयाय देहीमां तनयां प्रियाम्" ॥ १९६ ॥

पृथिवीपतिश्च पृथिवीं प्रत्यागत्य, स्वराज्यं स्वजनं चाऽदृष्ट्वा, रामाय रेवतीं दत्वा, विवाहोत्सवानन्तरं हिमवत्प्रान्तकान्तारं महते तपसेऽयासीत्॥

कुण्डिनम्—

अस्ति प्रशस्त-नगरं विभवप्रतीतं
नाम्ना च कुण्डिनमिति प्रचुरप्रसिद्धम्।
राजा विदर्भपतिरिन्दुकुलावतंसः
श्रीजन्मयोग्य इह भीष्मकनामधेयः ॥ १९७ ॥

रुक्मिणी—

नृपतेस्तावत् पुत्राः पञ्च रुक्माद्यः कुमारी चैका रुक्मिणीनाम्नी चाजायन्त। सा च—

उत्कृष्टशील-सुगुणाढ्य-सुमञ्जुलाङ्गी
कन्या रमेव भुवने दययाऽवतीर्णा।
स्वानां मनोहरण-नैपुण-युक्तरामा
रम्यैर्गुणैरनुदिनं ववृधे मनोज्ञा ॥ १९८ ॥

सा च बाल्यादारभ्य कृष्णस्य रामणीयक-विक्रमाद्यसंख्येयाऽप्रमेय-गुणगणान् श्रावं श्रावं तस्मिन्नेव संक्रान्तस्वान्ता मत्वा तं पतिं वव्रे।

आरूढयौवनां तनयां वीक्ष्य भीष्मकः कृष्णपाणिमेव रुक्मिणी गृह्णात्विति निर्णीय तत्परिणयाय प्रभूतसंभारमन्नाहमकार्षीत् ।

तद् दृष्ट्वा रोषाविष्टो ज्येष्ठतनुजो रुक्मी दनुजांश-संजातो जगाद तातमेवम्—

"वसुदेवसुतो नृपो नहि स्यात्
"पशुपालो न पतिर्भवेद्भगिन्याः ।
"स च मागधतो भयान्निगूढः
"शिशुपालो नरपाल एव योग्यः ॥ १९९ ॥

"अतो रुक्मिणी चेदिपं धरणीरमणशिखामणिं स्वपाणिग्रहणाय समर्हति । न तु कृष्णम्"— इत्युद्घुष्य स्थविरं पितरमनादृत्य, चेदिभूपाय भगिनीं प्रतिश्रुत्य, जरासन्ध-दन्तवक्त्र-माल्व प्रभृतीनामामन्त्रणपत्रिकां प्रेषयामास ।

विप्रसन्देश —

रुक्मिणी तु तन्निशम्य निशाम्य च नितान्तचिन्ता-सन्तानितान्तः-करणा, स्वस्याऽऽप्ततमं विप्रपुङ्गवं सुदामाभिधानमानाय्य कृष्णायाऽऽत्मनः सुदृढ-निश्चय संदानित-सन्देशं सत्वरं प्राहिणोत् । स च विप्रवर्यस्त्वरया प्राप्तद्वारकः हरिणा सादरं सत्कृतः सन्देशं हरये समार्पयदेवम्—'कृष्ण! रुक्मिणी वदति—

"श्रुत्वा सुन्दर! सद्-गुणाननुदिनं त्वय्येव चित्तं धृतं
"मां जायां कुरु चैद्यभागमिव ते चैद्यो न मां विन्दताम् ।
"सेनार्धं गमिनांमिरायतनतो नेया त्वया द्वारकां
"नो चेत् त्वद्गतमानसा व्रतकृशान् प्राणांस्त्यजामि ध्रुवम्"॥'

सन्देशमिममाकर्ण्य तथा कर्तुकामः कृष्णः सन्तुष्टः सत्वरं दारुका-नीतं रथवरं समारुह्य विप्रेण सत्रा सत्वरया कुण्डिननगरं प्राप्तवान् ।

तत्र—

रथ्या मार्जन-सेचनैः क्रमुकाम्रलांगलगुच्छकैः
रंभास्तंभपटादिभिः सुमतोरणैः शुशुभे भृशम् ।
रामा रम्यवरांबरा मणिहार-कुंकुम-मण्डिताः
भ्राजद्वस्त्रधरा नराः सुममालभारिण आसत ॥ २०१ ॥

पुत्राधीनो विदर्भपतिश्चैद्यं वरमुरीकृत्य कन्यादान-सन्नद्धोऽभवत् । कन्या च कृतमङ्गलस्नाना धृतकौतुकमङ्गला वरांबराभरणभूषिता सुभृशं शुशुभे । अथ भीष्मको भूयिष्ठविभवैर्भासुर-भूसुर-वरैः परिणय-पूर्वाङ्गानि साङ्गोपाङ्गानि निर्वर्तयामास ।

वरश्च चैद्यनृपालः शिशुपालो वरेण्यविशालनिशान्ते निवेशितः ।

कल्ये चैद्यनृपः शुचीकृतवपुः स्नातः कृताभ्यंजनः
क्षौमं चोत्तमवस्त्रयुग्ममथ सल्लेपांश्च माल्यानि च ।
काञ्चीकुण्डलकङ्कणानि मुकुटं केयूरमालावली-
र्बिभ्राणो वलयादि-भूषणचयं प्रालंबिवैकक्षिकम् ॥ २०२ ॥

कस्तूरी-तिलकाञ्चितो विशेषक-सुशोभितः ।
भूसुरैः कृतपूर्वाङ्गश्चातुरः पाणिपीडने ॥ २०३ ॥

नेपथ्याश्रित-रामणीयकवपुर्दर्पणे वीक्षमाण-
श्चात्मानं प्रतिबिंबितं स मदनं देहवन्तं सुमेने ।
रुक्मिण्याः करपीडनोन्मुखमनाः कालमान्द्यं न सेहे
शार्दूलो धृतवत्सकगमृत इव क्षत्रवन्ध्यावृतोऽभूत् ॥ २०४ ॥

अत्रान्तरे कृष्णप्रतिसन्देशमपश्यन्ती, प्रतिक्षणं विप्रप्रत्यागमनं प्रतीक्षन्ती, रुक्मिणी भृशार्ता, नितान्त-चिन्ताक्रान्त-चित्ता, संभ्रान्ता, किंकर्तव्यतामूढा, गाढं प्रतप्तहृदया, कृष्णमेव स्मरन्ती बभ्राम ।

तदा वामनेत्रं च वामौ भुजोरू
स्फुटं प्रास्फुरन् मङ्गलं सूचयन्तः ।
द्विजोऽप्यागोधं प्रविष्टो मुदाऽदात्
हरेः पत्रिकां प्राणदात्रीममुष्यै ॥ २०५ ॥

सा तां पत्रिकां सादरमादाय ससंभ्रमं पठित्वा पुनःपुनः सावधाना पाठं पाठं स्वात्मानमाश्वासयन्ती निजजनिं सफलाममनुत । तदनु प्राज्य-कृतज्ञतया प्रहर्ष-प्रकर्षेण क्षोणी गीर्वाण वदनं वीक्षमाणां रुक्मिणीं रमणी-मणिं "कृष्णः स्यन्दनेन कुण्डिनमाजग्मिवान्" इति व्यज्ञापयद् द्विज-तल्लजः । संप्रत्येषा संतोषस्य परां काष्ठामुपेयुषी पारितोषं सजोषप्रणाममेता-मुष्मै प्राकार्षीत् ।

अत्रान्तरे चैककः कृष्णः कुण्डिनमगमदिति विदित्वा बलभद्रो बृहतानीकबलेन सार्धमनुधावन् कुण्डिनं सत्वरमासेदिवान् ।

रुक्मिणीहरणम्—

परिणयक्षणप्रेक्षणप्रवणावागतौ रामकृष्णाविति मन्वानो मनुजेश्वरो वग्नवसनान्युपदीकृत्य समुचित निशान्ते तौ निवेशयामास । पुरेकमः कृष्णं वीक्ष्य सुकुमाराधाः राजकुमार्याः सुमदृशं वरं मेनिरे । अथ रुक्मिणी—

रुद्राण्याः पूजनार्थं हरिमनवरतं चिन्तयन्ती सखीभिः
भेरी-तूर्यादि-वाद्यैरपचितिविभवैर्माननतोऽभ्येत्य पद्भ्याम् ।
देवीमभ्यर्च्य सम्यक्प्रतिगमनविधौ विप्रदारैः परीता
शूरैर्गुप्ता समन्ताद् गजहयपदगैः स्रग्धरा याति मोदम् ॥ २०६ ॥

यदा कात्यायनीं देवीं कृष्णं पतिमयाचत ।
तदा घण्टारवैर्दुर्गा वल्लाभममसूचयत् ॥ २०७ ॥

अथ मन्दं मन्दं चरन्ती रुक्मिणी चिरुगविशेष्या उपरि मर्मरवर्यादि-पगर्ध्यमणिगणखचित शिरोभूषणेन समणिफणाफणीव पश्चाद्विराजमाना,

अलिकलाभ-सदृक्ष स्वभाव-कुटिलालकपरीतलमल्लामलना, पञ्चमी-शशांकसंकाशालिकमध्यलसत्कस्तूरीतिलकाङ्किता, सज्य पञ्चशर-शरासन-निभ भ्रूभागयुगा, चलन्नीलोत्पल-विलसन् कमल दल तुल्य लोचन युगला, चंपक कुड्मल प्रतिमोन्नतायतनासिका, कनककनककर्णिकाकुण्डल प्रतिफलित कपोलयुगला, प्रवालपङ्क्तिद्वयसमानरदनच्छदा, मन्दस्मितेषद्दृश्यमान-कुन्द-कुसुम निकर-सदृश रुचिर रद ततिः, हरि हृदयाह्लादनोचित-शृङ्गार-रसजीवित विधु वदना, शृङ्गारपुञ्ज स्तंभायमान-नम्र कम्र कंबुकण्ठी, ग्रैवेय-काद्यलंकृत वक्षःस्थला, मृणालिनी नालोपमित मृदु दीर्घ-बाहुयुग्मा, तत्प्रान्तविलसत् पाणिभ्यां व्याकोश कुशेशयं न्यक्कुर्वती, प्रवरहीरखचित-वलय निवह मञ्जु शिञ्जिता, कनक-जाल प्रोत कौसुंभ कौशेयांबरा, वरेण्य-मणि खचित नील क्षौमोत्तरीया, मञ्जु शिञ्जान किङ्किणी कदंबक-काञ्चन-काञ्चीबद्ध-नीविका, अलक्तक कुरुण्डक गैरिक रसरूपित पदकोकनद युगा पराग्र्य रत्नखचिताङ्गुलीयक-विलसद् हस्त-गृहीत सखीहस्ता, इतरकर-किसलयैर्लीलालकान् स्थाने मुहुः स्थापयन्ती, लज्जया चेषदाननमवन-मयन्ती, मनसा हृदय दयितं ध्यायन्ती—

कृष्णस्याऽऽगमनावकाशकरणे मन्दं करेणुर्यथा
गच्छन्तीव हरेर्गवेषणविधौ चक्षुर्दिशन्ती दिशि।
मेदिन्यामवतीर्ण मङ्गलवधूः कृष्णेन सयोजने
श्यामक्षेत्र कुतूहलेन भरिता प्रेष्मां तनोति ध्रुवम् ॥ २०८ ॥

सौन्दर्यातिशयेन चित्र कृतरतिः स्वात्मनः प्रेक्षणार्थं
भो कण्ठं स्थित-राजवीरनिवहं मार्गं पार्श्वस्थितं द्राक्।
उन्माथीस्मरणे प्रभूतरुचिरा केशवं सा ददर्श
प्रोढीस्याशु तत्र पदेऽदितवतीव क्षणं तिष्ठतिस्म ॥ २०९ ॥

रुक्मिण्या हृदयं विलंबकरणे हेतुं धिया तर्कयन्
सौन्दर्यातिशयं गुणांश्च स यथा शुश्राव पश्यंस्तथा।
कृष्णः सद्य उपेत्य तां भुजयुगे धृत्वा रथे वेशयन्
पश्यच्छूरसमक्षमेव हि ययौ शार्दूलविक्रीडितम् ॥ २१० ॥

तदानीं रुक्मिणी-वीक्षण-संरंभ-स्तंभिता, विस्मित-विस्मृत-हस्त-च्युतायुधाः, प्रणष्ट-निजधिषणाः, गाढनिद्राणा इव, मूर्छापन्ना इव, भृशतर-स्तिमिताः, साल्व-जरासन्ध-दन्तवक्त्र-विदूरथ-प्रभृतयो भटानां सम्भ्रम-संरंभ-संक्षोभकोलाहलैर्जागरिताः, कृच्छ्रादुदन्तं विदन्तो पुनर्गृहीत-हस्त-भ्रष्ट-प्रहरणाः, कृष्णेन सहाभ्यामर्दाय प्रयतमाना यावदेहन्त, तावत् कृष्णो विदूरथादिभ्यः सुदूरं जगमिवान्। तदा ते रामेण बहुमर्दिताः पराजिताश्च।

यादववीर-पराजित-भूपतयः सुपरवशाः
स्वस्य बलस्य च मर्दनमत्र निरीक्ष्य तदनु ते।
संगरमङ्गतलाच्च पराङ्मुखतां गत-गतय-
श्चेदिपतिं सकलं गुनिवेद्य विरक्तिमिह ददुः ॥ २११ ॥

सौन्दर्यातिशयितरुक्मिण्यो रमणीमणयो धरण्यामगणेयाः सन्तीत्युक्त्वा स्वं स्वं धाम जग्मुः ॥

कृष्णवीर्यमविज्ञाय रुक्मी चक्रे प्रतिश्रवम्।
"अहत्वा तं हरिं युद्धे नायास्ये कुण्डिनं पुनः" ॥ २१२ ॥

सेनयाथाक्षौहिण्या कृष्णमनुव्रजन् "तिष्ठ तिष्ठ त्वां शमनसदनं नयामि" इति ब्रुवन् तीव्रबाणान् अक्षिपत्। तान् छित्त्वा कृष्णः षड्भि-र्बाणैः रुक्मिणमाविध्यन् धनुश्चिच्छेद। अन्यद् धनुरददे सः। तदपि तेन प्रक्षिप्तशस्त्राण्यपि छित्त्वा, तदपि द्वितीयं धनुः चूर्णितवान् कृष्णः।

तदा रुक्मी कृपाणपाणिः कृष्णं तूर्णमद्रवत् । तदानीं कृष्णश्चतुर्भिर्बाणैः कृपाणं पञ्चधा भित्त्वा, 'नन्दक'मादद्दे । तदानीं रुक्मिणी कृष्णचरणयोः प्रणम्य प्रार्थयतैवम्—

"विरम विरम विष्णो! भूरि कारुण्यमूर्ते!
"निखिल-भुवन-योगक्षेम-कृत्यैक-दीक्ष! ।
"उपयमसमयेऽस्मिन् मंगलानां सुयोगे
"ह्युपयममयनं न भ्रातुरस्य प्रशस्तम् ॥ २१३ ॥

इति संत्रासवेपमानतनुलता गद्गदं याचमाना माधवं तद्वधान्निरुरुधे । तदापि तद् दर्पकर्तनाचिकीर्षुः कृष्णो वैरूप्यं वधप्रतिकृतिमवधार्य तं रथस्तंभे वस्त्रबन्धं बद्ध्वा तरवारिधारया तस्य श्मश्रु-केशान् प्रावापीत् ।

अत्रान्तरे बलभद्रः—
रिपुबलमखिलं द्रागुन्मर्दयित्वा बलोऽगा-
दनुनयवचसा तं रुक्मिणं मोचयित्वा ।
नयपथमुपदिश्य भ्रातरं धर्मसूचे
प्रचुरमुदमकार्षीद्रुक्मिणी मालिनी गा ॥ २१४ ॥

पराजयात् सोदरीपुरतः कृतावमानान्निजतीव्रप्रतिश्रवेण वैरूप्यनिमित्त-ह्रिया च कुण्डिनपुरप्रतिगमने भृशकुण्ठिताशस्तदुपकण्ठे भोजकटेऽसौ न्यवात्सीत् ॥

रुक्मिणी-परिणय —

तदनु विजयिनौ नीलांबर-पीतांबरौ द्वारकामागम्य महामहैः सह यथाविधि रुक्मिणी परिणयं कर्तुकामौ संभृत-भूरि-संभारौ विदर्भपति-प्रभृतीन् वधू-बान्धवान् कुरु-केकय-सृञ्जयादि राजन्यवर्गांश्चाह्वान-

पत्नैरामन्त्र्य सन्देश-हारिणं धरणीसुरं सुदामानमप्याहूय तान् समुचित-सुवेश्मसु सादरं ससत्कारं निवेश्य, द्वारकापुरीमलंचक्रतुः ।

तथा च—

मृष्टैः शृङ्गाटकाद्यैर्भवननिवहै मण्डितैर्मण्टपाद्यै-
र्द्वारि द्वारि प्रकुम्र-क्रमुक-कदली-नारिकेलादि-गुच्छैः ।
पूर्णैः कुंभैः फलाढ्यैः प्रघणनिहितैस्तोरणैश्चित्रमाल्यैः
स्त्री-पुंसानां महार्घ्याभरणवसनैर्द्वारकाऽलं रराजे ॥ २१५ ॥

मिष्टान्नैर्भक्ष्यभोज्यैर्विविधरसगुणैर्मोदकैर्भूरिभुक्तै-
रातिथ्यैः प्राज्यदानैरगणितनिवहैः कल्पवृक्षैव दत्तैः ।
नानावाद्यैर्विनोदैर्नटवरनटनैर्नाट्य-नृत्यादि-लास्यैः
प्राज्योत्साहेन घोषैः परिणयसुमहः साधु निर्वर्तितोऽभूत् ॥ २१६ ॥

एवंविध-विविध-निर्भर-प्रमद-प्रकर्ष-भरितायां द्वारकायां महा-महपर्यायैः पुरयात्रा-देवालय-यात्राद्युत्सवविलासैः रुक्मिणी-कृष्णयोः परिणयोत्सव-प्रक्रियाकलाप-कोलाहलैर्दिवसा दश व्यतीयुः ।

यत्र—

नेदुर्भेरि-पटह-मृदङ्ग-पणवा वीणा सुवेण्वादयः
संगीते कृतमुरसुधाः पुरुजगुः पाण्डित्य-मात्सर्यतः ।
चक्रे नर्तन-विविध-लास्य-नटनं पौराङ्गनानां गणः
सर्वेभ्योऽम्बर-कनकहार-वलयान् रामः प्रकामं ददौ ॥ २१७ ॥

अथाशेष-धरणी-रमणी-शिरोमणि-रुक्मिणी - परिणयक्षण - पूरण-विधौ विस्तीर्णोपायन-वितरण-प्रवणौ रमारमण-रेवतीरमणौ मदाराद्वुदारौ निजबन्धुजनेभ्यः समस्तपुरजनेभ्यो धरणीधवेभ्यो धरणीगीर्वाणेभ्यो

निखिलाभ्यागतेभ्यो विशिष्य सन्देशहारिणे विप्रवरेण्याय सुदाम्ने पराध्यभिरणांवराणि सामोदं सबहुमानं प्रकामं वितेरतुः । अनन्तरमपि—

कतिपयदिवसान् कुतूहलिभ्यो
विविध-विनोद-सुबोधकारि-भेदैः ।
प्रचुर-रुचिर-चित्रबाणदीपैः
प्रमद-भरं ददतुः सहोदरेन्द्रौ ॥ २१८ ॥

एवंविध-विविध-महोद्भव-वितान-विलासैः संकलित-जन-संकल-प्रहर्ष-प्रकर्ष-विजृंभित-कलकलरव-मुखरित-हरिन्मुखा पुरी हसनमुखी चकासामासे । किंच सा—

दृष्ट्वा विष्णुं सुवेषं श्रियमपि धरणौ रुक्मिणीवेषभूषां
संयोगं चापि मध्वः परिणयविधिना भूरि भद्रं विधातुम् ।
यत्रेमौ संवसेतां प्रमदविभवतश्चात्मनाऽत्रैव वास्यं
मत्वेत्थं भूः स्वयं चाप्यवतरणविधौ स्रग्धरा द्वारकाऽभूत् ॥

स्यमन्तकः—

आसीत्तदा यदुकुलप्रभवो मनस्वी
सत्राजिदाख्य-सुकृती निशितैस्तपोभिः ।
लेभे मणिं दिनमणेः प्रचुरप्रसादात्
ख्यातं स्यमन्तकमणीति सुवर्णदात्रीम् ॥ २२० ॥

सा च मणिः प्रतिदिवसं सुवर्णभारमजनयत् । प्रभूतभद्रं च समन्तात् । सत्राजितः सत्यभामाभिधाना पुत्री समजनि चैका सन्ततिः । सा—

सत्यभामा—

अगलचिकुरालका स्वलिक-नासिका-भ्रू-रदा
कलासु भृशशिक्षिता समरवीक्षणे वीतभीः ।

सुसूक्ष्म-धिषणायुता बहुवधूगुणैकायना
सुमत्व-धृति-साहसैः सकलकार्यनिर्वाहिका ॥ २२१ ॥

विविध-प्रभूत-प्रभाव-महितां स्यमन्तकमणिं धरणीधवसौधे निधाय सार्वजनीन-साहायकं राज्यसामान्य-श्वःश्रेयसं च चिकीर्षुः कृष्णः क्षितिपतेः कृते सत्राजितं तं मणिं वनित्वा प्रत्याख्यातः ।

अथैकदा तावत् सत्राजितोऽनुजः प्रसेनाभिधानो मुदा कंठे-बद्ध-स्यमन्तको मृगयां गतो मृगेन्द्रेण मारितः । वृत्तान्तानभिज्ञाः सत्राजित्-प्रभृतयः कृष्णे निरागसि मन्तुममंसत ।

जांबवान्—

आत्मशुद्धिं चिकीर्षुः कृष्णः पौरवरांः सह प्रसेनगवेषणप्रवणः प्रस्थायारण्याय दूरे चाग्रेवणं चावगाह्य पगमनापन्नं प्रसेनसंहननं ततोऽनतिदूरे पञ्चतापन्न-पञ्चास्यकायं चाद्राक्षीत् । अग्रेवणं निकटगिरिगह्वरं निरीक्षमाणः पौरप्रधानान् अभ्याशप्रदेशे निवेशयन् नदेककः प्रविश्य तत्र क्रीडा-प्रवण-रमणी-मणि-पाणौ मणिमदर्शत् । तदा पराक्रमण-कुपित-विक्रान्त-ऋक्षवर्यः कृष्णमभ्यामर्द्य मुष्टी-मुष्टि युद्धमकार्षीत् । कृष्णस्तावदष्टादश दिनानि भृश-भीषणरणं कुर्वाणो वरेण्य-भल्लस्तल्लजं कुर्च्छेणवाऽजैपीत् । "पुरुषोत्तमादृते नाऽहं केनापि पराजय्यः" इति दृढप्रत्ययवान् जांबवान् पुरुषोत्तमं दिदृक्षुः समुद्धृत-पक्ष्माक्षिभ्यां वीक्षमाणः स्वस्वामिगमचन्द्ररूपा-त्तनीयांसं समक्षमक्षिविषयभूतं कृष्णं पश्यन्नम्रः सन्, स्वस्वामिरूपदर्शन-मार्थयत । तदा—

सव्ये कोदण्डं निशितविशिखं हस्तयोर्बिभ्रतं तं
नीलाभ्रश्यामं स्मितयुतमुखं धीरगंभीर-भावम् ।
क्रव्यादां कालं पवननयेनाऽऽश्रितं मैथिलीशं
साधूनां संरक्षणचणतमं राघवं प्रैक्षतर्क्षः ॥ २२२ ॥

जांबवती—

अथ निर्भर-भक्ति-पुरस्सरं हरिं सुचिरं दरीदृश्यमानः प्रदक्षिणप्रणिपातान् चेक्रीयमाणः समणीं रमणीमणीं जांबवतीं भल्लूकनक्लजो हरये समार्पयत् ।

अथ हरिर्बहिरागत्य पौरानदृष्ट्वा स्यमन्तक-सीमन्तिनी-मणिभ्यां साकं द्वारकामागत्य, तदुद्वाहं बहुविभवविस्तृतमहततिभिः सह निर्वर्त्य, नृपसभायां समस्तोदन्तमावेद्य, सम्यगपनोदितात्मापवादः स्यमन्तकं सत्राजिते ददौ । स च निरागसि कृष्णेऽपराधपातनादतिवेललज्जावलीढस्तदघपरिजिहीर्षुः सन्नुत्तमर्णाय सकुसीदमूलधनमिव स्यमन्तकमणिना साकं रमणीमणीं सत्यभामां हरये समर्पयितुं तामानाय्य कृष्णसविधे किंचिदवाङ्मुखस्तूष्णीं क्षणं तिष्ठन् कृष्णाय सुवाणीमभाणीत्—

"स्यमन्तकं कुमारीं च द्वे मण्यौ ते ददाम्यहम् ।
"स्वीकुरुष्व मयि प्रीत्या मन्मन्तुं क्षन्तुमर्हसि" ॥ २२३ ॥
वरं वीक्ष्य स्वयं सद्यः प्रशस्य स्वस्य धन्यताम् ।
स्वजन्म सफलं मेने सत्यभामा हृदन्तरे ॥ २२४ ॥
भामां शस्तगुणोपेतां निशम्याऽऽप हरिर्मुदम् ।
सत्राजितमिमां वाणीं प्रत्यभाणीन्मुदावहाम् ॥ २२५ ॥
"गृह्णामीमां जीवमणीं साऽलं स्यान्मे सुखंकरी ।
"तपोलब्धा जडमणिस्तवैव स्तात् शिवंकरी" ॥ २२६ ॥
"उपग्राह्यं स्वजामात्रा प्रीत्या दत्तमुपायनम्" ।
वदन्नेवं स जग्राह प्रतिदत्तमणिं मुदा ॥ २२७ ॥
स्वमनोरथमप्येवं दिष्ट्या मेनेऽत्र साधितम् ।
एवं भूयिष्ठ-सन्तोषः पक्षेषु त्रिष्वजायत ॥ २२८ ॥

धनद इव धनाढ्यः प्राज्यभृत्य-परिच्छदः ।
संभार-नय-संपन्नः प्राज्य-सन्नाहकारकः ॥ २२९ ॥

आमन्त्र्य बान्धवान् सर्वान् वृष्ण्यन्धकमदूद्भवान् ।
भूयिष्ठैर्विभवैः सार्धं प्रारेभे महसंहतिम् ॥ २३० ॥

सत्यभामापरिणय.—

अथ शुभे दिवसे, शोभने मुहूर्ते, पुरुहूत-पुरोधसा सदृशं गर्गर्षिप्रभं कुलपुरोहितं पुरोधाय, क्षोणीगीर्वाणवरेण्यगणैः सत्रा सत्राजिद्धामामणि-कृष्णयोः परिणयविधिना पाणिग्रहणमगणेयदक्षिणा-वितरणचणः संपूर्णतां प्रणिनाय । तथा च पुरयात्रा-देवालययात्राद्युत्सवैः, मिष्टान्न-नानाविधगुणव्यञ्जन-पायस-परमान्न-चित्रान्न-बहुविधभक्ष्य-भोज्य-भोजन-लेह्य-चोष्य-पेय-पदार्थैः, भेरी-तूर्यादि पटह-पणव-मृदङ्गादि-वादित्र-वीणा-वेणु-कण्ठ-संगीत-गोष्ठीभिः, पौराङ्गना-संघात-संगीत - नृत्य - नर्तन-लास्य-नट-नर्तक-नटन-नर्तन-प्रकटन-विनोदैर्नानाविध-हास्य-जनकृतिभि-र्विविध-विचित्रतर - दीपावलीभि - र्वह्निबाणावलीभिश्च, सार्वजनीनानन्द-सन्दोह-सन्दायिनो दिवसान् षोडश, दिनैकमिषोज्जृम्भमाण-प्रचुरप्रमदभरित-भूरिजनसंकुल-ससम्भ्रम-संरंभ-चलन-वचन - कलकल - निनद - प्रतिनादित-रोदोन्तरालान्, वैवाहिक-प्रक्रिया-पर्याय-कलाप-संबद्धान्, अत्यवाहयत् महती मानवसंहतिः ।

अनन्तरमपरिमेय-यौतकेन साकं वरमदनं वधूवरौ प्रेषयामास सः ।
एवं स्यमन्तकमणिः कृष्णाय द्वे रमणीमणी समाददे ॥

गच्छत्यनेहसि हलिहरी हस्तिनापुरं प्रयाताविति विज्ञाय रन्ध्रान्वे-षिणौ कृतनर्मा क्रूरौ प्रत्याख्यान-भग्न-सत्यभामाकामनेन शतधन्वना तत्र—

संधुक्षित-मत्सरेण निद्राणं सत्राजितं घातयित्वा तस्मान्निक्षेपमिव स्यमन्तकमणिमलभेताम् ।

अथात्यर्थ-दुःखिताया गजाह्वयं गतायाः सत्यभामाया मुखादुदन्तं विज्ञाय हलिहरी सत्वरं-प्रत्यागतद्वारकौ तत्र शतधन्वानमपश्यन्तौ ततः प्राप्तमिथिलौ तत्रस्थ-शतधन्वानं निहत्यापि मणिं नालभेताम् । तदा पुनर्द्वारकामागतः कृष्णोऽक्रूरमानाय्य प्रथमोपायविधया तं मणिमप्राक्षीत् । तत्प्रत्यर्पण-प्रतिश्रवानन्तरं शतधन्वना तस्मिन्निक्षिप्तं मणिमदर्शयत् । ततः कृष्णस्तं मणिं तस्माचेवादात् ॥

सुभद्रा—

आसीदशेषललनातिलकायमाना
कृष्णानुजा समिहिता सुगुणैः सुभद्रा ।
आरूढ-यौवनदशा नृपवीरयोग्या
स्वानां प्रमोदमनुवासरमेधयन्ती ॥ २३१ ॥

रामस्तदर्हं मनुते सुयोधनं
सर्वे तदन्येऽर्जुनमेव मन्वते ।
पार्थे सुभद्रा निदधे मतिं दृढां
सौन्दर्य-वीर्य-प्रथिते धनुर्धरे ॥ २३२ ॥

सुभद्राहरणम्—

सकलोपायकुशलस्य कृष्णस्यादेशात्—

पार्थः काषायवल्कः स्फटिकमणिमयैः कङ्कणैः कर्णलम्बैः
रुद्राक्षैः कण्ठहारैर्नवमणिगुडिका-कुण्डिकाद्यैः समेतः ।
भूयिष्ठैर्भस्मलेपैर्यतिवरतिलकाकल्पविभ्राट् त्रिदण्डी
स्तव्याक्षो द्वारकायां वटविटपितटे व्याघ्रचर्मण्यतिष्ठत् ॥२३३॥

तत्रापि—"नारायण! नारायण" इति मुहुर्मुहुर्व्याहरन् समीपागत-जनान् प्रति—"असारं संसारं जहित मृगतृष्णिकासदृशं विषयसुखं स्वप्नसमम्। त्यजत मोहं मनुजवरा" इति परवैराग्यं बोधयन् कतिपयैरेवाहोभिर्जनेषु प्रत्ययमुत्पाद्य राजद्वारे लब्ध-प्रवेशो रामेण सत्कृतः पार्थभिक्षुको भिक्षामग्रहीत्। विस्रंभातिशयवशाद्बलभद्रः सौधैककोणे यतिं वासयन् पूजाद्रव्याणि समर्पयन्, तद्वरिवस्यार्थं तदनुजिघृक्षाजननाय स्वानुजां सुभद्रां न्ययौक्षीत्॥

सोऽपि कपटयागधारी परार्घ्य-परिचारिकां दर्शं दर्शं मन्धुक्षित-हृच्छयः, स्मेरास्य-प्रकटित-रुचिरकुन्दनिभ-दन्तपङ्क्तिभ्यां विशाललोचनापाङ्गनाकृतालोकनैश्च ललनातल्लजहृदयं मजोषमकार्षीत्॥ कपट-कर्मन्दिनि कापट्यं अमन्वानां तां सुभद्रां विजयो निजतत्वं समावेद्य समुचितावसर-प्रतीक्षामादिशत्सः॥ तदनु नितान्त-सन्तोष-प्रकर्षाविष्टधिषणा कृष्णानुजा प्राप्तरूपा प्राप्तमनोरथा सन्तोष-सन्दोहं विन्दमाना, सव्रीड-मन्दस्मित-सल्लाप-विलासैः साकं विजयाय सुपरिचर्या चेक्रीयमाणा, किंचिद्दिवं सजोषं विषेहे। अथ प्रकाशकर-शारदागमे सोमेश्वरोत्सव-यात्रागमे सति-

सर्वज्ञो विजयाय सायुध-रथारूढां सुभद्रां ददत्  
व्याजेन क्षणवीक्षणे प्रहितवान् दूरं नगर्या बहिः।  
संकेतस्थल उत्पतन् रथवरे पार्थो भटान् रुन्धतो  
विद्राव्य स्वपुरं निनाय दयितां शार्दूलविक्रीडितम्॥ २३४॥

इदं श्रुत्वा रामः क्षुभितहृदयो रक्तनयनो  
हलं गृह्णन् योद्धुं झटिति चलितः किंतु हरिणा।  
प्रणामैः पादाब्जे मृदुमधुरवाचोपशमितः  
कथंचित्सेहेऽयं कृतपरिणयां तां शिखरिणीम्॥ २३५॥

अथ नीलांबरः पीतांबरमेवं व्याजहार। "त्वं कपटकर्मन्दिने दर्शनमपि न ददिवान्। किं कुर्वीत वराकी हठादपहृता सहोदरी। अयं

राक्षसविवाहः स्यात्। अत आवयोरेकतरस्याभावे स्वजनवदनालोकनहीना कुररीव करुणं रुद्यात्सोदरी खवगा। मम गमनं तु न शस्तम्। तथापहरण-गर्वावलिप्त-प्रतारकदर्शनेन-सन्धुक्षितं मुसलं कुशलं न कुर्यात्। त्वं तु पाण्डवपक्षपाती। अतस्त्वमेव गच्छ" इत्युक्त्वा बहु-हय-रथ-गज-पदातिभिर्हरणैः सहाऽवरोध-वधू-जनैः कृष्णं हस्त्याह्वयाय प्रजिघाय॥

सुभद्रापरिणय.—

अचिराय—

किरीटी हस्त्याह्वे प्रमदभरिते कृष्णस्य सविधे
सुधापूर्तागारे बहुवितरणैर्मिष्टान्नविभवैः।
मुहूर्ते सुश्लाघ्ये स्वजनमिलितो वैवाहिकविधौ
सुभद्रायाः पाणिं प्रणयभरितः स्वीयेन जगृहे॥ २३६॥

एवं निखिललोकाभिलषितपूरणनैपुणचणः कृष्णस्तत्र वासरांश्चतुरः सर्वजन-प्रीणनचतुरोऽवात्सीत्। निखिलबान्धवान् सुधासारनिष्यन्दभाषणैरानन्दसन्दोहं विन्दयन् गोविन्दस्तैरमन्दानन्दसन्दोहपूर्वमभिनन्दितो बहुवन्दितो निजनगरमन्दिरममन्दमविन्दत॥

कतिपय-मासानन्तरं पाण्डव - दिदृक्षुः पुण्डरीकाक्षः सात्यक्यादिभिः सार्धं प्राप्तेन्द्रप्रस्थः शमनपरनात्मजौ प्रणम्य,पुरन्दरनन्दनमालिंग्य, चाश्विनीतनयाभ्यामभिनन्दितः, कृष्णा-कृष्णानुजाभ्यामभिनन्दितः कुन्ती-देव्या साकं कुशल-ललितं संभाषमाणो धर्मनन्दनमानन्दयन्नास्त॥

कालिन्दी—

तदा कस्मिंश्चिद्दिवसे पार्थः महरी रथमारुह्य यमुनातटनिकटाटव्यां मृगयायामितः पिपासाकुलः फल्गुनः, कालिन्दीमेकलो गत्वा, तदन्तःकाञ्चन कन्यकन्यकाशिरोमणिं कृष्णेप्सया तपस्यन्तीं तद्वचनमाज्ञाय तां कालिन्दीनाम्नीं कृष्णे समर्प्य, ताभ्यां सह प्रमदनमासमगात्॥

खाण्डवदहनम्—

हरियुतविजयोऽन्यदा खाण्डवाख्यं वनं प्राप्य त-
द्भगशरनिकरैः क्षणात्पञ्जरेणाऽऽवृतं कारयन् ।
चपलमनलसादकार्षीत्समग्रं ततः स्वीकृते
रथ-सितहययुग्म-गाण्डीव-तूणीर-बाणादिकः ॥ २३७ ॥

सभानिर्माणम्—

अथ हरिप्रेरणया विश्वकर्मनिर्मिते परमाश्चर्यकरमन्दिरे धनञ्जया-न्मोचनेन मयः कृतज्ञो धनञ्जयाय भृशविचित्रतरसभां निर्ममे माधवगिरा सूचिताम् । यत्र—

मजलं निरंबु तलभूः सजलेति
प्रतिभाति चेतसि यथार्थ-विरुद्धम् ।
स्वभिमान-लिप्त मनसां मदहानिं
जनयेत्सभेति हरिसूचितमेतत् ॥ २३८ ॥

कालिन्दीपरिणय —

तदनु—

द्वारकां केशवः कालिन्दीमनैषीत्समोदं
सजोषं वैभवाढ्योत्सवैः साकं प्राज्यमिष्टान्न भोज्यैः ।
वाद्यघोषैः सुसंगीतनृत्य लास्यैर्विनोदै-
र्बन्धुभिश्चावृतस्तामुद्वाहरीत्योपयेमे ॥ २३९ ॥

मित्रविन्दा—

अथावन्ती-राजाधिदेव्या गोविन्दस्य पितृष्वसुर्नन्दिनी मित्रविन्दा-नाम्नी चारूढ यौवना हरिमेव वरमकामयत । किं तु तस्याः सोदरौ विन्दानु-विन्दाभिधौ सुयोधनपक्षपातिनौ गोविन्दमनिच्छन्तौ स्वयंवरं चिकीर्षू बहून् महीपतीनाहूय सभायां न्यवेशयताम् ।

ज्ञात्वैवं माधवस्तां प्रचुरतरसाऽगादवन्तीं ग्रहीतुं
वर्या श्रेष्ठं समीक्ष्य प्रमुदितमनास्तं वव्रुर्पुस्तदानीम् ।
प्रीतो भक्तानुकंपो दृढमनुविदन् मित्रविन्दानुरागं
जित्वा सोदर्यवीरान् स्वभुजबलतो द्वारकां तामनैषीत् ॥ २४० ॥

सत्या—

आसीदयोध्यानगरे नग्नजिन्नाम राजा । तत्सुता सत्याख्या सुरूपशीलगुणगणाढ्या । तां च बहवो महीधवाश्चकमिरे । किंतु जनकः कन्याशुल्कं सप्तवृषभयुगपद्वशीकरणमकल्पयत् । तेषां निशित-निष्ठुर-विषाणाग्रैः प्रोथिता भग्नाङ्गाः भग्नाशा बहवो बभूवुः । आकर्णितवार्तः कृष्णः सानीकः सपार्थः कोसलनगरं गत्वा धरणीरमणेन सत्कृतः सत्यया कामितश्च । तदा संश्रुत-तीव्रशुल्कमालोच्य भूपो भृशमनुतेपे । अथ प्रासादोद्याने नृपेण प्रदर्शितान् कृष्णः—

वृषभान् वीक्ष्य कठोरशृंगयुगलान् पीनान् सुदुर्धर्षणान्
लघुकायान् समसंख्यकान् दधदजो मत्तेभविक्रीडितम् ।
दयितानानयदङ्गना सकलहृत्संतोषमुत्पादयन्
सह नानादुपदौकनैर्बहुविधैर्जग्राह सत्याकरम् ॥ २४१ ॥

अथ सह सत्यया स्वपुराय प्रतस्थे मुदा माधवः सविजयो विजयी ॥

तदा—

पथि कृष्णरथं रुरुधुर्हताशाः
कुभृतः कुपिता जयशालिने ते ।
वृष-निष्ठुर-शृंग-कृत-क्षतीनां
विजयास्त्रगणः शमनं गुनेने ॥ २४२ ॥

भद्रा—

सन्तर्दनादयः कृष्णमाहूय बहुमानतः ।
श्रुतकीर्तिसुतां भद्रां रतां तस्मै मुदा ददुः ॥ २४३ ॥
विवाहविधिना साकं मङ्गलग्रंथ वितेनिरे ।
प्रभूत-पारिबर्हेश्च द्वारकां प्रेषयन् वधूम् ॥ २४४ ॥

लक्ष्मणा—

अथ बृहत्सेन-नाम्नः—

मद्राधिपस्य तनया बहुलक्षणान्विता
प्रागू नारदाद्धरिगुणानवगम्य लक्षणा ।
कृष्णे मनः परमधादितरेषु दुर्मना-
स्तातस्तु शुल्कमकरोद् झषयन्त्र-भेदनम् ॥ २४५ ॥

बहवो लक्ष्मणापाणिकांक्षिणः क्षोणीरमणा मीनभेदने भग्न-प्रयत्ना भग्न मनोरथा बभूवुः, यत्र अधस्थजले दृष्टिं निधाय चोर्ध्वमत्स्य-भेदनं कार्यम् ॥ सजिष्णुः कृष्णस्तु—

धनुः सज्यं कृत्वा विशिखमथ सन्धाय सहसा
सकृन्नीरं दृष्ट्वा हरिररमभांक्षीद् झषयुगम् ।
सुराश्चकुर्वृष्टिं दिवि सुमनसां प्रीतमनसा
हरेः कण्ठे हारं सुनिहितवती सा शिखरिणी ॥ २४६ ॥

अथ लक्ष्मणः कृष्णः सलक्षणः सविजयो विजयी जगाम स्वधाम मुदा ॥





एवं कृष्णो निजभुजबलाद्रूपरागादि हेतो-
रष्टौ पत्नीरलभत लघु स्वाष्टभक्तिस्वरूपाः ।
लोकास्तुष्टिं प्रचुरविभवं मङ्गलं गाढमापुः
सुब्रह्मण्यः पदसुमकृतं पञ्चमं हारमाधाम् ॥ २४७ ॥





सत्यं शुद्धं विबुद्धं जयति तव वपुर्नित्यमुक्तं निरीहं
निर्द्वन्द्वं निर्विकारं निखिलगुणगणव्यञ्जनाधारभूतम् ।
निर्मूलं निर्मलं तन्निरवधिमहिमोल्लासि निर्लीनमन्त-
र्निस्सङ्गानां मुनीनां निरुपमपरमानन्दसान्द्रप्रकाशम् ॥ २४८ ॥

---

अव्यक्तं ते स्वरूपं दुरधिगमतमं तत्तु शुद्धैकसत्त्वं
व्यक्तं चाप्येतदेव स्फुटममृतरसांभोधिकल्लोलतुल्यम् ।
सर्वोत्कृष्टामभीष्टां तदिह गुणरसेनैव चित्तं हरन्तीं
मूर्तिं ते संश्रयेऽहं पवनपुरपते पाहि मां कृष्ण रागात् ॥ २४९ ॥

---

अग्रे पश्यामि तेजो निबिडतरकलायावलीलोभनीयं
पीयूषाप्लावितोऽहं तदनु तदुदरे दिव्यकैशोरवेषम् ।
तारुण्यारंभरम्यं परमसुखरसास्वादरोमाञ्चिताङ्गै-
रावीतं नारदाद्यैर्विलसदुपनिषत्सुन्दरीमण्डलैश्च ॥ २५० ॥

(नारायणीयम्)



# कृष्णोल्लासः




## प्रौढोल्लासः





सत्येन लभ्यस्तपसा ह्येष आत्मा
सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो
यं पश्यन्ति यतयः क्षीणदोषाः ॥ (मुं. ३ । १ । ५)



# कृष्णोल्लासः



## षष्ठी माला



## प्रौढोल्लासः



नरकासुरवधः —

आसीत्तदा क्षितिसुतो नरकासुराभिधः
प्राग्ज्योतिषाख्यनगरे भृशशक्तिविश्रुतः ।
जित्वा महेन्द्रमथ तस्य सितातपच्छत्रं
शृंगं च कुण्डलमपाहरदस्य मातृतः ॥२५१॥

युद्धे घोरतरे विजित्य स हठाद्राज्ञः सहस्राधिकान्
हत्वाऽन्तःपुरयोषितश्च सह तैः कारागृहे प्राक्षिपत् ।
सर्वेषां जगति प्रभूत कदनं हिंसापरश्चाकरो-
दित्याकर्ण्य हरिः श्रितानतचणश्चक्रे मतिं तद्वधे ॥ २५२ ॥

तथा च माधवः सत्यभामया सार्धं तार्क्ष्यपृष्ठमधिष्ठाय प्राग्ज्योतिषपुरं प्राप्य गिरिदुर्गं शस्त्रदुर्गं जलानिलानलदुर्गाणि घोरमुरासुरपाशैर्निर्भर-दुर्गम-दुर्गाणि चाभ्यामर्द्य, गदया गिरीन्, कर्कशनिशिखैः शस्त्रदुर्गाणि, चक्रेण जलादि दुर्गाणि, तरवारिणा मुरपाशांश्च प्रणाश्य, पाञ्चजन्यप्रध्मानेन प्राग्ज्योतिषपत्तनं तत्क्षणं प्रक्षोभ्य भृशं कृत्स्नशः तस्थौ ।

गुरोऽथ निरगाज्जलात्त्रिभुवनं मुरैः पञ्चभि-
र्ग्रसन्निव खगेश्वरे सपदि शूलमास्यन्नदन् ।
शरैस्तदभनक् क्षणाद्धरिरमुं मुखे ताडयन्
गदां च शतशोऽच्छिनद्दलगणं चक्रारिणा ॥ २५३ ॥

ततस्तत्सुतानुदायुधांस्ताम्रादीन् हरिररिणा तूर्णमेव तरणितनय-सदनं प्राहिणोत् । तदा नरकासुरो भृशातुरो बहिरागतो—

हरिं दृष्ट्वा भौमः खगपतिगले भामासमेतं स्थितं
तटित्वन्तं सूर्योपरि धृतमिवाक्षेप्सीच्छतघ्नीं क्रुधा ।
भटाः शस्त्राण्यासन् युगपदनदन् चिच्छेद सर्वाण्यजो
गरुत्मान् पक्षाभ्यां गजहयभटान् ग्रस्तं चकारैककम् ॥२५४॥

तदानीमत्यर्थ-क्रोधाक्रान्त-स्वान्तः क्षितिसुतो यावच्चैलोचनं त्रिशूल-मप्रतिहार्यममोघं प्रचिक्षिप्सुर्हस्ते गृह्णाति तावदेव क्षणे कृष्णस्तच्छिर-श्चिच्छेद कर्कश-चक्रेण । तदा—

यदाऽस्य शीर्षं सकिरीटकुण्डलं
पपात भूमौ भगदत्तमात्मजम् ।
हरेः पदाब्जे प्रणमय्य काश्यपी
स्वनुग्रहीतुं भगवन्तमार्थयत् ॥ २५५ ॥

तथा कुर्वन् कृष्णो धरणीधरान् विमुच्य स्वधाम प्राहिणोत् ।

नरकाहृत-राजकन्यकानां
मुमुचे षोडशकाहतं सहस्रम् ।
अथ चात्मनि सगिर्णामनोज्ञाः
परिणेतुं सपुरं स्वनीनयत्ताः ॥ २५६ ॥

ताभिः सुमृष्ट-विरजांबराभिरभिजात-सीमन्तिनीभिः साकं महा-कोशान् वाहप्रकाण्डानभ्रमुकुलोत्पन्न-पाण्डुरचतुर्दन्तदन्तावलांश्च द्वारकायै प्रैषयद्धरिः ।

इन्द्रलोके—

अथ ससत्यभामो हरिर्भगवान् विहगपतिवाहनः पुरन्दरमन्दिरमधिगम्यामर्त्य-मात्रे कुण्डलयुगलं दत्वा, सुधर्मायां वृत्रघ्ने सितातपत्रं मणि-शृंगेण सत्रा प्रददे । हर्षप्रकर्षेण हरिणा हरिं नितरामादृतोऽपि सत्यभामा मानुषवपुष्मतीति तुरापाण्महिष्या पारिजात-भूषणानर्हेति दिव्यकुसुमेन नादृता ।

अथ सत्यभामया साकं सुधर्माणममरावतीमुच्चैःश्रवसमभ्र-मातंगं सुरदीर्घिकातटनिकटे वृन्दारक-सुन्दरीहृदयानन्द-सन्दोह-सन्दायि संक्रन्दन-नन्दनोद्यानं च संवीक्ष्यामन्दमानन्दमविन्दत गोविन्दः। तत्र माकन्द-मन्दार-चन्दन-स्यन्दन-चंपक-चांपेय-कुन्द-तिन्दुकादि-द्रुमवीरु-द्वृन्दमिन्दिन्दिरवृन्द-कलरवमुखरितेन्दिरामन्दिरायमाणेन्दीवरारविन्दकर्द-मकं, इन्द्रादिवृन्दारकवृन्दवन्दित वृन्दारक-मुनिवृन्दारक-दैनन्दिनमुकुन्द-वन्दनाय स्यन्दमान-मकरन्दविन्दु-सन्दोह-संदिग्ध-मालती-माधवी-मल्लिकाकुसुम-निकुरुंबं, सन्तानपारिजातादि-कल्पद्रुमषण्डं, कामिनीमानस-कन्दर्प-सन्दायक-नन्दनोद्यानवने सान्द्रामन्दानन्द-सन्दोहं विन्दमानौ दंपती मन्दं मन्दं दरीदृश्यमानौ ह्यमन्दानन्दथुमविन्देताम् । तदनु—

सुरतरुनिकरं निरीक्ष्य रामा
प्रमदभरेण हृदन्तरं पुपूरे ।
अपि च मनसि पारिजातकेच्छा
बहु भवतीति बभाण सत्यभामा ॥ २५७ ॥

विचक्षणदक्षिणः कृष्णो भामाभिलषितं बहुमन्यमानस्तामेवं प्रतिभाषमाण एव—

पारिजातहरणम्—

"साधु भाषितं त्वया ममापि वल्लभः स वृक्षः
"साधयामि कामितं तवे"ति तद्द्रुमुज्जहार।
तत्क्षणं पुरन्दरो रुषा रुरोध तं ससैन्यः
तं विजित्य तार्क्ष्यवाहनः स्वपत्तनं जगाम॥ २५८॥

अथामरतरुं भामामन्दिर-प्रमदवने प्रत्यष्ठापयत्सः।

बहुपत्नीकः कृष्णः—

तदनु षोडशसहस्रसंख्याकाः सुकुमारा राजकुमारीस्तत्समसंख्याकरूपधरो हरिर्युगपद् यथाविधि ताः परिणीय प्रत्येकं सुनिर्मित-मन्दिरेषु सुखंकरेषु ता निवेशयन् सर्वेषु गृहेषु गृहमेधी सन् स्वसर्वगत्वं सर्वव्यापकत्वं नित्यानन्दत्वं च पृथिव्यां प्रथयन् प्रतिबभौ भगवान्। एवं पराशक्तिकलाः षोडशसहस्र-भेदेन मत्यः मद्यः संयोगेन परमात्मावताररूपं कृष्णं संपूर्णकलावन्तमकार्षुः—

सुन्दर्यः प्राप्य कृष्णं पतिमभिलषितं स्वस्वसदने-
ष्वभ्यर्च्योमां शिवानीं नतिनुतिततिभिः पूज्य-गुरूमाम्।
प्रेम्णा प्रोत्कर्षरामा धवभजनधियाः साधुसुभगा-
श्चक्रुस्ते भर्तृसेवां प्रमदसुभगिताः कंतवनिताः॥ २५९॥

बाण —

आसीन्महाबलि-सुतः प्रथितप्रभावो
बाणाभिधान-नृपतिः पुरि शोणितायाम्।

यः शंकरं कुशलनर्तनगीतवाद्यैः
सन्तोष्य तं स्वपुरपालकमाशु चक्रे ॥ २६० ॥

दशशत-भुजैर्युक्तो बाणः प्रभूतबलान्वितः
प्रतिभटमलब्ध्वा युद्धे बाहुपाम-शमाप्तये।
सुघन-परिघाद्यैर्व्यायामैः पलालजपादनै-
र्दिवसमनुवृद्धिं प्रापद्बाहुदण्डगणो भृशम् ॥ २६१ ॥

अथ विशंकट-पीवर-कण्ठलतर-प्रचण्ड-दोर्दण्ड-षण्ड-मण्डितोऽयं द्वारकोपकण्ठस्थमपण्डानन्दताण्डवशौण्डं दण्डित-दण्डधरं कुण्डलिकुण्डलं पुण्डरीक-चर्ममण्डितं पुण्डरीकाक्षमखं शिखण्डिक-पिचण्डिक-प्रचण्ड-चण्डिकोपगूढकण्ठं शितिकण्ठं खण्डपरशुं मण्डूक इव कुण्डलिप्रकाण्डं कुण्डलितखज इवाण्डजप्रकाण्डं मृग इव मृगेन्द्रं शलभ इव प्रदीपं भीषण-फणिगणभूषणं निटिलज्वलनलोचनं उपगम्य द्वन्द्वाहवायाऽऽजुहुवे।

तदा—

निशम्य वचनं तथा बलिसुतस्य दर्पाविलं
विपद्रुममपि स्वयं प्रततमेव छेत्तुं स्वयम्।
न सांप्रतमिति स्मरन् निटिललोचनं मीलयन्
कृपाकलित-भाषितं स्मितमुखस्तमाहेश्वरः ॥ २६२ ॥

"अचिरादिहैति समरे कुशलः
"पुरुषः क्षमो मृधमदं दमितुम्।
"भुजदण्डषण्ड-जडतापनये
"मम भक्तविग्रह इहानुचितः" ॥ २६३ ॥

श्रुत्वैवं शितिकण्ठ-भाषितममुं तूर्णं क्षणं तस्थिवान्
निर्माय्याथ सभूरिभारपरिघान् स्थूणागदाश्चायसीः।

व्यायामान् सुभृशं भुजैः सुविहरन् किञ्चित्स्वमाश्वासयन्
युद्धोत्कण्ठिततर्पण-क्षपणको दिष्टं श्रमादत्यगात् ॥ २६४ ॥

उषा—

बाणपुत्री ह्युषानाम्नी शस्त-सौन्दर्य-वित्ता
वर्धमाना निशान्ते सा यौवनश्री-निशान्ता ।
चन्द्रकान्तं सुशीला कन्यापुरे सा सुगुप्ता
प्राज्य-व्युष्टा सखीभिः तारुण्यकेल्यां च रेमे ॥ २६५ ॥

अथ निशान्ते निशान्ते कस्मिंश्चित्—

निशान्ते केनचिद्यूना स्वप्नभुक्तेव चारुणा ।
स्वप्नादुत्थाय चान्विष्य निशान्तमेव साऽपश्यत् ॥ २६६ ॥

उषोषा सचिवप्रकाण्डस्य कुम्भाण्डकाख्यस्य पुत्रीं चित्रलेखाख्यां चित्रलेखनचतुरां सखीमासन्नामाहूय स्वप्नवृत्तान्तं चाख्याय तद्युवप्रेम्णावेगेन भ्रान्तस्वान्ता तामवदेवम्—"प्रियसखि!

"चित्रलेखे स्वरूपाणां लेखने तेऽस्ति नैपुणम् ।
"सुन्दरः कश्चिदागत्य प्रमदं मे ददौ परम् ॥ २६७ ॥

"तस्य रूपं विलिख्यात्र प्राणत्राणं कुरुष्व मे ।
"यस्य दर्शनतः प्राणधारण-प्रवणास्म्यहम्" ॥ २६८ ॥

अथ चित्रलेखा लेखन-सामग्रीमादाय क्रमेण पाकशासन-पाकशासनि-नरवाहन-नलकूबर-चित्ररथादीनमर यक्ष गन्धर्व-प्रमुखान् विलिख्य तत्र सखीं पराङ्मुखीं वीक्ष्य, मर्त्यवर्गमुपाक्रमत । तत्र शिशुपाल-शाल्व-जरासन्ध काशिराजादि-रूपदर्शने वैमनस्यं निशाम्य, दुर्योधन-कर्णादौ दौर्मनस्यं पश्यन्ती, वृकोदर-विजयादि-पाण्डवेषु चाऽतृप्तिमद्राक्षीत् । अथ यादव-समुदाये बलभद्र-प्रतिरूपेक्षणे क्षणदिष्ट-निविष्ट-दृष्टिर्दृष्ट्वा ततो

निरस्यन्तीं च निशाम्य केशवस्य रूपमदर्शयत्। अत्र सादरं सोत्कण्ठं चिरमुपा निरीक्ष्याभाषत—

"प्रत्यङ्गं ध्रुवमेष एव पुरुषः पश्यामि दीर्घेक्षणे
"स्मेरास्यं पुरुरामणीयकनपुथाजानुबाह्वोर्युगम्।
"आलोलालक-चुंबितं सुनिटिलं कुन्दाभदन्तावलिम्
"किं त्वस्मात्सुयवीयसा तनुभृताऽऽश्लिष्टा स्मरामि स्फुटम्॥

तदनु लिखित-प्रद्युम्न-प्रतिकृतिं निपुणतरं सादरं सुवीक्ष्य ततोऽपि चेषद्यवीयानिन्युक्तवत्यामुषायां तत्तनुजस्यानिरुद्धस्य प्रतिमानं विलिख्य दर्शयामास चयसा।

सद्य एव तं—

समीक्ष्य स्वकान्त-स्वरूपं सदोषा
प्रपन्नं सुराशादिति प्राज्य-तृषा।
सखीं स्वं च विस्मृत्य सन्तुष्ट-रामा
सुशीलाऽऽशु लेभे प्रमोदं सुजोषम्॥ २७०॥

तदालोक्य चित्रलेखा सखीमनोरथपूरण-प्रवणा तन्निपुणयोगसिद्धि-मती तां सहसा विहाय विहायसा प्रस्थाय द्वारकामासाद्य तन्निशायामेव सखट्वमनिरुद्धमुषानिशान्ते न्यवेशयत्।

हृदयदयितं प्राप्योषा तं पतिं भृशकांक्षितं
रुचिरवपुषं यत्सत्यं वै निशामणि-वंशजम्।
मुदिततनुनी कान्ता दिष्ट्या समंजस-रोचनै-
र्ललित-लपनैः प्राप्ता सौधे नितान्त-सुरं शुभम्॥ २७१॥

अथाऽनतिचिरस्याऽऽपन्नसत्वायास्तस्या बलसतनुतादिभिः पुरुषो-पभोगचिह्नैश्च भयशङ्काकुलिता आरक्षिकभटाःभूभर्तारमावेदयन्। तदैव सः-

बाणो रोषविभीषणो झटिति तत्कन्यावरोधं विशन्
पश्यंस्तत्र युवानमाशु सुभगं दीव्यन्तमक्षैस्तया ।
कन्यादूषकमप्यमुं न हतवान् विभ्यत्सुतादुःसतः
प्रघ्नन् मुद्गरहेतिना निजभटान् पाशैर्बबन्ध स्वयम् ॥ २७२ ॥

तदनु तं कारागृहे चिक्षेप सः । पश्चप-मासानन्तरं नारदमुनिमुखात्तद्वार्तामाज्ञाय यादवा अनीकानां द्वादशभिरक्षौहिणीभिः सार्कं सहसा शोणितपुरमभितो न्यरुन्धन् ।

तदा—

क्ष्वेलाक्रन्दन-वीरवादनिनदैर्यादवाग्रेसराणां
कल्पोद्भूत घनाघनस्तनितवद्बृंहितैर्नागगणानाम् ।
विस्फारैर्धनुषां दृढप्रहरण-व्यूहसंघट्टनाद्यै-
र्मर्यादेश्वरघातशब्दविसरैश्चान्तरिक्षं पुपूरे ॥ २७३ ॥

तदानीं समान संख्याकसेनया सार्कं युद्ध-सन्नद्धो भूत्वा बाणो गोपुराद्बहिरागत्य चिरकांक्षित लब्ध-प्रधन-प्रकर्ष-प्रहर्ष-जुष्टः सात्यकिना सार्कं द्वन्द्वनियुद्धमारेभे । हरिर्हर जृम्भणास्त्रेण स्तंभयित्वा रिपुसैन्यं निर्दयमभ्यामर्द्यामर्दयद् भृशम् । तदा बाणो विहाय सात्यकिं हरिमभिपत्य—

बाणः पश्चशतेषु पाणिषु शरानन्येषु चापान्दधन्
बाणानां युगपत्सहस्रमसृजन् कृष्णे स भग्नाखिलान् ।
हत्वा सैन्धव-सारर्थीश्च तस्मा संर्वं प्रदर्ध्मा तदा
तन्मातास्य पुरःस्थिता रणमुखे मृत्योर्मुमोचाऽऽत्मजम् ॥

यावद्धरिः पराङ्मुखोऽभूत्तावद्बाणः स्वपुरमधावत् । अत्रान्तरे तानच्छिन्नभूतगणा ज्वरनागश्च वैष्णवैः शमिता बभूवुः । बाणस्तावद्रथान्तरमारुह्य युद्धसन्नद्धो भूत्वा रणाङ्गणं पुनः प्रविश्य शरगणां सहस्रं हरौ ववर्ष ।

सर्वानपि तान् कृष्णः क्षणेन छित्वा कर्कश संगरमारेभे। तदा विषकण्ठः कृष्णं तोषयंस्तुष्टावैनम् —

"अहं महेन्द्राद्या नगसुरगणा भवेम तवाश्रिताः
"त्वमात्मा सर्वेषां परममयनं गतामभयप्रदः।
"त्वमन्तर्यामी नो हृदयकमले सदा सकलात्मनां
"अतस्त्वं श्रेष्ठोऽसि प्रमदजनकः प्रसीद दयानिधे" ॥ २७५ ॥

आकर्ण्येमां वाणीं हरिरभाणीदेनम्—

"प्रह्लादाय वरं ददे कुलजन-ध्वंसं न कुर्यामिति
"प्रध्वस्तस्तु मदोऽस्य ते सदयितः स्यादस्य शश्वत्सुखम्।
"बाणो जीवतु निर्भयो बहुममा भक्त्या त्वदंघ्रिद्वये
"नन्नाऽयं मम भक्तशेखरमणेरेषोऽपि मे वल्लभः" ॥ २७६ ॥

एवं भगवतानुगृहीतस्तत्कृपाकटाक्ष विशेषपात्र-भूतो बाणो भगवतः प्रणतिप्रणुति-ततिभिः प्रीणनं तेनिवानलम्।

माधवपादपङ्कजयुगे दृढनिहितगति-
र्भक्तिकृतज्ञता विनय गौरवभरित मतिः।
रत्नसुमरलंकृतरथे यदुवरसहितः
पुत्रिकयाऽनिरुद्धमधिरोप्य यदुपुरमगात् ॥ २७७ ॥

ते द्वारकामासाद्य तत्र महोत्सवैः प्रहर्षमापुः ॥

नारदविस्मय —

अथ कदाचिन् कथमेककः कृष्णः परःसहस्रान् दारान्निर्वहतीति भृश शंका-कुतुकी नारमुनिवरो नारदो द्वारकामागत्य कनक-रजत रत्न-निकर निर्मितानि मन्दिरवृन्दानि, नाना-सुरभि-कुसुम किसलय माल्यालं-

कृतानि, कूजत्-पिक-शुक शिखि-शारिका-युतानि, पुरुमधुकरकलघोषजुष्टानि माधव-वधू-सदनानि दर्शं दर्शं हर्ष-प्रकर्ष-विस्मयाविष्टस्तेषामेकतमं प्रविवेश ।

अस्मिन् गृहे मुनिरदर्शदर्जं सुवेषं
विश्रान्तये शयनमास्थितमद्य कृष्णम् ।
दासीजनैः परिवृतापि करे गृहीत्वा
पत्नी धुनोति चमरी व्यजनं समोदम् ॥ २७८ ॥

वेश्मान्तरे निजवधूद्वयोः समीपे
दीव्यन्तमक्ष-फलके पुरुनर्म-भापम् ।
प्रत्यग्र-दर्शनमिव प्रतिभाषमाणं
दृष्ट्वा स सत्कृतिमिहाप्युरीचकार ॥ २७९ ॥

अन्यत्र—

दृष्ट्वा भार्या भवनकृतिषु व्यग्रचित्तां रुदन्तं
डिम्भं स्वाङ्के मृदुल-वचनैर्लालयन्तं गृहस्थम् ।
गृहान्धर्मान् विधिमनुभृशं श्रद्धया चाचरन्तं
विप्रान् भोज्यैरपचितिविधौ तर्पयन्तं गृहेशम् ॥ २८० ॥

तथा क्वचित्-क्रतुकरणकर्मठं, अन्यत्र पूर्तनिर्वर्तनपरं, परत्र मन्त्रिभिरेकान्ते मन्त्रयन्तं, यत्र गृहमेधिव्यापारेषु व्याप्रियमाणं, नानावस्थानस्थितं कपटमानुषवेषजुष्टं कृष्णं सजो दर्शं दर्शं, तदपरिमेयमहिमानं स्मारं स्मारं, योगमायाया दुर्ज्ञेयतां मानं मानं, निर्जरमुनिकुञ्जरो वारं वारं विस्मयस्य परां काष्ठां जगिमवान् ॥

कृत्स्नं व्याप्य स्थितोऽयः सकलजनिमतामन्तरात्मा च साक्षी
किं चित्रं द्वारकायां कतिपयसदनान्तःस्थितो यौगपद्यात् ।

लोकानां क्षेमकृत्यै धृतमनुजवपुः सर्वगत्वप्रकर्ष-
ज्ञानेच्छूनां जगत्यां सुखमनगतये सुष्ठु दृष्टान्तमादात् ॥ २८१ ॥

एवं गेहे गेहे गृहस्थ-धर्मार्थ नित्य-नैमित्तिक कर्म-कलापानि च प्रकटयन्—

कल्ये चोत्थाय कृष्णः प्रतिदिनमिव ध्यायको ब्रह्मतत्त्वं
भूशुद्धिं भूतशुद्धिं पुरुप्रदितरवो मातृका हंसमन्त्रे ।
जप्त्वाऽऽत्मानं युनानं सततविलसत्सच्चिदानन्दरूपं
ध्यात्वा गोभूहिरण्यान्यननिसुग्मात्कारयित्वा निरगात् ॥ २८२ ॥

अथ स्वस्तिक मदनमासाद्य दर्शन काङ्क्षिणो बन्धु मित्र जनान् सादर सामोदं चाऽऽभाष्य तांस्तोषयित्वा व्यसृजत् । अथापनीय निशा भरणानि ताररहित शशाङ्क-संकाशः समुचित व्यायामोपकरणवतीं व्यायामभूमिकां प्रविश्य शरीर-स्वेदनावधि नाना व्यायामान् कृत्वा, स्नानागार अर्णःपूर्ण द्रोणीमनाथं गत्वा, स्फाटिक पीठमधितिष्ठति । तत्राऽऽमलक तैलादिनाभ्यक्तः कनककलशगत-कुंकुमजलेन, रजत-कुंभगत चन्दनवन रसेन, स्फटिक कलश कलित शुद्धाम्भसा च क्रमेण स्नात्वा, द्रोण्यां विशन्, प्रकामं सजोषं सुष्ठु स्नात्वा, ततो बहिरागत्य परिमार्ष्टि शुष्कवस्त्रैः ।

तदा—

वीणा वेणु मृदङ्ग वाद्य कलितैः संगीतनादान्वितैः
बन्दीनां स्तुतिवाचनैश्च निनदैरापूरि रोदोन्तरम् ।
शंखध्मान विजृंभणेन च तदा स्नानावधिः सूचितः
श्रीकृष्णः परिमार्जितः परिदधे क्षौम सुवासोयुगम् ॥ २८३ ॥

गन्धाद्यैः सुविलेपनैरलिकस्थले सुविशेषकः
केयूरादि विभूषणैः कुसुमैः समं समलंकृतः ।

प्रातःकृत्यमशेषतः परिपूरयन् सुसमाहितो
गो-विप्रांश्च सुपूजयन् शुभदर्शनानि चकार सः ॥ २८४ ॥

ततो—

विस्तीर्णं भोजनागारं विशन् सुष्ठु परिष्कृतम् ।
कलत्र-पुत्र मित्राद्यैः सोऽतिष्ठत्सुखमासने ॥ २८५ ॥
नानाभक्ष्य-सुभोज्यानि सगुणानि फलैःसमम् ।
समयोचित-नर्मार्थैस्तोषयन् बुभुजे स तान् ॥ २८६ ॥

चन्दनोदक-सेचनैः सुरभीकृतां शिशिरीकृतां
मल्लिकासुमपूरणैः सुमनोहरां पदवीमनु ।
प्रेयसीसहितोऽगमत्सुपटावृतासनमञ्चके
संविशन् प्रिययार्पितां शुभवीटिकां वदने दधौ ॥ २८७ ॥

तदा कृष्णः कनकवेत्रलतावलंबिनं कंचुकिनं—"आनीयतां रथः" इत्याज्ञापयत् । तयैवाज्ञया बहिर्गमनमनुमाय परिजनाः कटक-मुकुटाद्या-कल्पकलापमादाय समीपेऽवर्तन्त । अथागत्य प्रतीहारी क्षितितलनिहित-वामजानुपाणी रथमागतं स्वामिने व्यज्ञापयत् तदा निपुणा भामामणी रमणं क्षणेन कलिताकल्पमकल्पयत् । तदा सन्तोषसूचक - मन्दस्मित - सहित - समीक्षणेन साकं "राजसभामेमि" इति सादरमाभाष्य निकटाङ्गणे दारुकानीतरथमारुह्य हरी राजसभामागात्, तत्र परमासनमध्यासीनः प्रवर्तमान-नृत्य - गीत - वादित्रैः - वन्दिमागधसंतकृत - स्तुतिमिश्च सन्तुष्टः सजोषमतिष्ठत् ॥

अथ घस्रे कस्मिंश्चित्तत्र सभायां राजदूतः कश्चिदागत्य, सबहुमान-मभिवन्द्य च जरासन्ध-सन्दोहन-बंधुराधनदुर्दशामावेदयत् । तदनुक्षणे च त्रिविष्टपर्षि-वृषभो नारद आगत्य सत्कृतश्च समुचितासने निवेशितः"पाण्डवा-

श्चिकीर्षित-राजसूय-सवराजाय तवागमनमाकांक्षन्ति" इत्यभाषत कृष्णम् । तदानीमिन्द्रप्रस्थ-यात्राविमुखतां यादवानामाशंक्य दीप्त-धिषणं सचिवोत्तम-मुद्धवं किंकर्तव्यतामप्राक्षीत् यादवहर्यक्षः कृष्णः । तदा बुद्धिमतां वरिष्ठो मन्त्रिश्रेष्ठः सप्रश्रयमवादीत् ।

"हस्त्याह्वाय गतौ भवन्ति नियतं संख्याविहीना गुणाः
"सर्वाराति-निबर्हणं सववरस्यावश्यकं पूर्वतः ।
"कीर्तिं पाण्डुसुता अवाप्नुयुरलं शत्रून्विजित्याखिलान्
"भीमो मागधभूपतेः समबलस्त्वत्सन्निधानात्परः" ॥२८८॥

ऊहापोह-विचारितं गुणदोष-चिन्तन-संगतं
मन्त्रीश-प्रतिभाषितं स्वसमीहितं बहुसंमतम् ।
कृष्णः स्वीकृतवान्मुदा मुनिपुंगवं नृपदूतम-
प्याभाष्याऽऽश्रवसंमितं गमने मतिं त्वरया दधौ ॥ २८९ ॥

अथाग्रजन्मानमुग्रसेनसहायं निधाय हरिरिन्द्रप्रस्थाय प्रतिष्ठासुः कृष्णो दारुकानीतं दिव्यं स्यन्दनमधिष्ठाय पाकशासनप्रस्थोपकण्ठं सोत्कण्ठमुपेयिवान् । तावदेव तत्र गीतवादित्र-विप्रत्रयीघोषैर्बन्दिमागध-संस्तवैः सह पाण्डुसुताः सादरं सबहुमानं समभिगम्य सभाजयन्तः पुरं प्रवेश्य चाभिवादनालिंगनानन्तरं मधुपर्कादिभिरभ्यर्च्य समुचित-सुवेश्मनि निवेशयामासुः ॥





इन्द्रप्रस्थे स्वजनसहितः सर्वसौख्यैश्च युक्तः
सायं प्रातर्विजयसहितः सञ्चरन् स्यन्दनाद्यैः ।
बन्धुप्रीतिं प्रतिदिनमजो वर्धयन् योवमत्तं
सुब्रह्मण्यः पदसुमकृतेनार्चये पद्मदाम्ना ॥ २९० ॥





कृष्णं शारदचन्द्रकोटिसदृशं शंखं रथाङ्गं गदा-
मम्भोजं दधतं सिताब्जनिलयं कान्त्या जगन्मोहनम् ।
आबद्धाङ्गदहारकुण्डल महामौलिस्फुरत्कङ्कणं
श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रैः स्तुतम् ॥ २९१ ॥ (मन्त्र-रत्न)



एतद्ध्येवाक्षरं ब्रह्म
एतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा
यो यदिच्छति तस्य तत् ॥ (क. 1. 2 16.)



# कृष्णोल्लासः



## सप्तमी माला



## करुणोल्लासः



महासगाप.—

धर्मात्मा शमनात्मजो जनपतिः सोदर्यवीरान्वितो
विप्रेन्द्रैर्मुनिपुंगवैः परिवृतः सिंहासने तस्थिवान् ।
संबोध्यात्र हरिं समोदविनयं वाणीमभाणीदिमां
"यक्ष्येऽहं क्रतुनह्लजं तव वृणे साहाय्यमस्मिन्भवे"॥

निशम्य सुशुभां वार्त्ता माधवो मधुरया गिरा प्रतिददावुत्तरमित्थम् —

"अतीव श्लाघ्यं तद्यदिह मनुषे क्षत्रयशसे
"रिपूणामुन्माथो भवति नियतं घोरसमरे ।
"सुवीर्य्याः सोदर्य्याः पवनसुतपार्थाश्वितनयाः
"मदीयात्मान्निध्यादुरुरिपुजये शक्नुयुरलम्" ॥ २९३ ॥

एवं वासुदेववचसा प्रोत्साहितो यमसुतो भूयिष्ठ-मन्तोपजुष्टो-ऽध्वरश्रेष्ठ-चिकीर्षा-परः संभृत-भूरि-संभारः, सहदेवं दक्षिणस्यां दिशि, नकुलं प्रतीच्यां, पार्थमुत्तरस्यां चाऽराति-विजयाय प्रजिघाय। अथ विजयिना विजयेन प्रत्यावृत्तेन च प्रभञ्जनात्मजेन साकं कृष्णः प्राचीं दिशं प्रातिष्ठत ।

तदा भीमार्जुनाभ्यां छद्मवेषधारिभ्यां साकं स्वयमपि भूसुरेन भासमानः कृष्णः जरासन्ध-सौधं प्रतिजगाम ।

जरासन्धवधः—

द्विजवेषं धरन्तस्ते जरासन्धमुपागमन् ।
वरदानश्रवं लब्ध्वा नियुद्धं तं ययाचिरे ॥ २९४ ॥
सहस्रगज-शक्त्याढ्यो द्विजैर्द्वन्द्वे जुगुप्सितः ।
वरदाननिबद्धः सन् हेलया जगृहे मृधम् ॥ २९५ ॥

दशशतद्विपशक्त्यवलेपतो
द्विजजनैः सह द्वन्द्वजुगुप्सितः ।
अथ वरस्य निबन्धन-हेतुना
स जगृहे मृधमत्र सहेलनम् ॥ २९६ ॥

ततस्ते स्वस्वरूपेण प्रादुर्भवन्तः स्वस्य नामान्यभिदधिरे। तदानीं मागधस्तानभिदधावित्थम्—

"बालोऽयं विजयो गदाग्रहणे चाभ्यासहीनो ध्रुवं
"कृष्णो मातुलघातकोऽब्धिनिभृतो नेच्छामि तेनाहवम् ।
"भीमेनाद्य मृधं करोमि हि मुदा वैदग्ध्यमस्यास्त्यलं"
चेत्युक्त्वाऽऽददिवान् गदा बहुविधा भीमाय चेष्टां ददौ॥२९७॥

स्वस्मै चैकामादाय भीमेन सत्रा तत्र नियुद्धमारेभे । तदा—

गदाग्रहरभीषणौ बहुतिथं मिथो जघ्नतु-
र्बभञ्जतुरुभे गदे तदनु मुष्टिभिः प्राहताम् ।
समौ ददर्शिवान् हरिर्विटपपाटनं दर्शयन्
वृकोदरकरात्तथा झटिति पाटयामास तम् ॥ २९८ ॥
मगधेषु सुतं निधाय कृष्णः
करुणार्द्रः सहदेव-नामभाजम् ।

मुमुचे नृपतीन्परःसहस्रान्
अथ चैपामुरीचकार पूजाम् ॥ २९९ ॥



अथ तानुपदिश्य सतां पथो
नववस्त्र-भूषण-भूपितान् ।
विदधद्विविधान्नफलैर्मुदं
निजराज्यमयापयदीश्वरः ॥ ३०० ॥

अथ प्रभञ्जन-पुरन्दर-नन्दनाभ्यां साकं गोविन्दो विजयी जयशंख-ध्मानेन समभिन्द्रप्रस्थं प्रविश्य शमननन्दनायामन्दानन्दसन्दोहसन्दाय-कोदन्तमशेषमभापत । स च प्रचुर-प्रहर्ष-प्रकर्षेण कृतज्ञतातिशयेन च भूरिपूरित-हृदयो निष्पन्दमानानन्द-बाष्पधारा-संपातयुक्तकपोलश्रिरं निष्पन्दस्तूष्णीमतिष्ठत् ॥

अथ यथाविधि यज्ञवाटं विधाय व्यास-वसिष्ठ-पराशर-गौतम-गर्ग-भार्गव-वैशंपायन-धौम्य-जैमिनि-प्रभृतीनृत्विजः कृत्वा धर्मनन्दनोऽध्वर-दीक्षामविक्षत् । विविध-कार्य-निपुणतरनिर्वहणार्थमधिकारिणो गुणानुगुणं न्ययोजिपतवम्—

भीमः पाकविधौ न्ययोजि चतुरो जिष्णुश्च सेनाविधौ
पूजायां सहदेव एव सुकृती दुर्योधनो वित्तपः ।
संभाराहरणे प्रवीण-नकुलः प्रक्षालने केशवः
पाञ्चाली परिवेषणे सुहृदया कर्णो वदान्योऽहृतौ ॥ ३०१ ॥

अग्रपूजा—

अथ सोमाभिषव - दिवसे याजकादीनभ्यर्च्याग्रपूजाम्थानाय कोऽर्हतम इति विमृशति क्षितिभृति,

सर्वोत्तमे परम-पूरुषः स्वभूः
अशेष-कर्मपतिरत्र पूज्यताम्।
स सर्वदेवपतिरेष यज्ञभुङ्
नितान्तमर्हति परार्ध्य-पूजनम् ॥ ३०२ ॥

निशम्येमां शुभां त्राह्मीं सभासदः साधु साध्विति निर्भरमभिननन्दुः। साकूतमेव सभ्यैरभिप्रेतमिति प्रचुर-प्रमद-भरितः सभार्यः सभ्रातृको धर्मराजोऽच्युतो भूयिष्ठया भक्त्या भगवतः पादांभोरुहयुग्मं प्रक्षाल्य, प्रोक्ष्य च तत्तीर्थं स्वस्य स्वानां च शिरसि, पीतकौशेयवासोयुगेन पुष्कल-भूषणवारेण सुरभिगन्ध-चार्चिक्य-स्थासकमाल्यैर्धूपदीपाद्युपचारैर्नीराजनैश्च साक्षाद्यज्ञभोक्तारं सादरं सामोदं सबहुमानं प्रकाममभ्यर्च्य, कृतार्थमात्मानं मन्यमानो धन्यतमो बभूव। सर्वेऽपि सभास्तारा जयजयशब्दमुदीरयन्तः पुष्पवर्षं ववृषुः।

शिशुपालसंहारः—

तदा शिशुपाल उत्थाय रुषाकलुषिताक्षो रूक्षतरभाषया समक्षं सभाध्यक्षानध्यक्षिपन् साक्षेपमित्थम्—

"अहो धन सभासदः कृतमिदं युक्तं भवेन्न कदा
"शिशोर्वचनमादृतं प्रवयसः प्राज्ञास्तु नो गणिताः।
"महर्षिवरसंकुले व्रजवधू जारं खलापसदं
"समुद्रमधिवासिनं किमिह भोः प्रभ्रष्टमर्चयथ" ॥३०३॥

आकर्ण्येत्थं कर्णारुन्तुद-कर्कशवचांसि सभास्ताराः श्रवसी पिधाय बहिर्निर्जग्मुः॥ वृकोदर-किरीटिनौ मात्स्य-केकय-सृञ्जयाश्चाऽत्यर्थ-क्रुद्धाः सायुधाः शिशुपालमभिहन्तुमुत्तस्थुः। तदा हरिर्न स्वभागं स्मरन् तान् न्यवारयत्।

सम्पन्नफल उत्थितः सपदि चेदिभूपालकः
रुषा कलुषितेक्षणो हरिस्तान् वृथाऽतर्जयत् ।
अथैनमरिणा हरिः समहरच्छिरःकृन्तनात्
महान् कलकलोऽभवत्तदनुयायिनो दुद्रुवुः ॥ ३०४ ॥

चैद्यभूपवपुषः पृथुतेजो
वासुदेवमविशद्धि तदानीम् ।
पश्यतां सकल-सभ्यजनानां
विष्णु-पार्षदवरो हि स चैद्यः ॥ ३०५ ॥

तदनु तमुत्तम-सप्ततन्तुं समाप्य, भूयिष्ठ-दक्षिणादिभिरभ्यर्च्य ऋत्विजः सादरं सबहुमानं सभ्यांश्च संपूज्य, यजमानः सभार्यश्चकारावभृथस्नानम् ।

अथ हरिः सांबादीन् द्वारकां प्रति प्रस्थाप्य बन्धुप्रीतये तत्र कतिपयमासानवात्सीत् । राजसूयाध्वरवरेण दुर्योधनमन्तरेण सर्वे जना निर्भरप्रमद-भरिता बभूवुः ॥

दुर्योधनपराभव —

अचिरस्य पक्षे कस्मिंश्चिन् सभोदर्यामात्ये युधिष्ठिरे सवासुदेवे वरासनासीने सति, सुरसुन्दरीसदृक्ष-कृष्णमहिषीभिः सह सहास-संलापादीनि कुर्वाणायाश्चटुलेक्षणभ्रूविक्षेपण-विभ्रम - विलास - निर्जित - निर्जर - प्रमदाया द्रौपद्या निरीक्षणेन पञ्चभिरपि पञ्चशरसर्गविद्धः प्रहर्ष-प्रकर्ष-जुष्ट-जोषाणामवभृथस्नानानुगमनसंभ्रम-वीक्षणेन च परमाभ्युदय-वीक्षणाक्षमो दुर्हृदयदूषितो दुःशब्दविशेषित-नामसुषां सहजनुषां शतस्याग्रजनुः दुर्योधनः, कलिरिव कायवान्, अभिमान इव वनुमान्, नितान्त-संक्षुभित-स्वान्तः

कोशादुद्धृत-कौक्षेयकस्य भ्रमण-प्रकटितेर्ष्या-रूपितविपणो द्वारपाननादरेण निःसार्य, मयनिर्मितां जलस्थलभ्रमिकां सभां प्रविशन्, स्थले जलभ्रान्त्योद्धृत-चेलांचलो, जले स्थलभ्रान्त्या निःशंकधाष्टर्येण त्वरमाणः, स्खलितचरणः क्लिन्नवसनः पपात। तदा—

पतने च तथा सुयोधनस्य
प्रसभं सभ्यजनो जहास वीक्ष्य।
द्रुपदस्य सुता जहास रामा
पवमानस्य सुतो जहास चोच्चैः॥ ३०६॥

तदालोक्य सभ्याः समस्ताः सभीमाः
तमुच्चैर्हसन्तोऽवमानं प्रचक्रुः।

सुयोधनस्तु—

विमानोपविष्टां वधूवृन्दमध्ये
स कृष्णां हसन्तीं सुपश्यन्नकुप्यत्॥ ३०७॥

सत्वरमेव तीव्ररोपामर्षितः कोपाग्रेसरो निश्चक्राम दुर्मनाः। समवर्तितनुजो मनुजान् हसतो निवारयामास। भगवांस्तु भावि-भारत-प्रधनप्रथमबीजावापं तन्वानश्चैकनेत्रान्तसंकोचसंज्ञया तान् संधुक्षितवान्॥

साल्वः—

अत्रान्तरे शिशुपालसखः साल्वो नाम वसुधाधवो रुक्मिण्या अपहारकाले यादव-बलेनाऽतिवेलमर्दितः सन् शृण्वतामशेषधरणीधगणां "अयादवां वसुधां विधास्ये" इति कर्कश-शपथं चक्रिवान्। सच—

श्रीकण्ठं तपसा प्रसाद्य दयया सौभं विमानं ततो
लब्ध्वा खे गमनक्षमं नहि वगमेयं च कामंगमम्।

द्वारक्यां स ववर्ष शस्त्र-निवहान् गोत्रद्रुमान् भूरिशो
वीथी-वेश्म-जनाद्युरोध सुभृशं साल्वः प्रतिज्ञाकरः॥ ३०८॥

तदा प्रद्युम्न-सांब-प्रभृतयो यादववीरा रिपुबलमत्यर्थमार्दयन्। प्रद्युम्नस्तु साल्वसचिवमौर्वीघातेन मूर्च्छितः क्षणेन प्रतिलब्ध-संज्ञः पुनर्युध्यमान आस्त।

अत्रान्तरे बहुदुर्निमित्तदर्शनात् सत्वरं दामोदरो द्वारकामागत्य तत्र प्रवर्तमानप्रधने साल्वं शरवारैर्विव्याध। स तु मुहूर्तमन्तर्धाय वासुदेवाग्रतो माया-वसुदेवमादाय तच्छिरश्चिच्छेद। तदनु "त्वां शमन-सदनं नयामि" इति कृष्णमाचचक्षे। तदा भगवानरिणा छित्वा तस्य शिरः लोकतोपमातनोत्॥

दन्तवक्त्राय मोक्षः—

आकर्ण्य साल्वनिधनं स तु दन्तवक्त्रः
पद्भ्यामुपेत्य गदया सह कृष्णमूचे।
"अद्यैव हन्मि खलु मातुलघातिनं त्वां"
इत्थं ब्रुवन् स हरिशीर्ष्णि भृशं प्रजह्रे॥ ३०९॥

तदविगणय्य कृष्णः कौमोदक्या तस्य वक्षसि जघान।

गदाप्रहरणाद्विभिन्नवक्षा
असृग्वमनवक्त्रो दन्तवक्त्रः।
पपात धरणौ प्राणान् विसृज्य
क्षणादविशदस्य ज्योतिरीशम्॥ ३१०॥

श्रुतवृत्त.—

श्रुतवृत्तः साल्वसोदरो विदूरथाख्योऽत्यर्थ-दुःखितो वैरनिर्यातनपरः कृपाण-चर्म-पाणिः कृष्णं तूर्णं रणायाभिदुद्रुवे शलभ इव निर्भरज्वलज्ज्वलनं पद्भ्याम्। क्षणेन च कृष्णः क्षुरनेमिना चक्रेण चकर्त तच्छिरः।

इत्थं शमिताशेषशत्रुः केशवः—

मुनिभिर्मनुजैः पितृभिस्त्रिदशैः
प्रचुरं विविधं पणितः प्रयशाः ।
स्वपुरं स्वजनैः प्रविवेश हरि-
र्ववृषुः कुसुमान्यमरा मुदिताः ॥ ३११ ॥

कुचेलः—

आसीत्कृष्णस्य मित्रं गुरुकुलवसतेर्विप्रवर्यः सतीर्थ्यः
गार्हस्थ्ये वर्तमानो जितहृदरिगणोऽयत्नलाभेन तुष्टः ।
धृत्वा धर्मं च मोक्षं भवसुखविमुखश्चार्थकामौ निरस्यन्
कुर्वन्नाम्ना सुदामा सुशमितदुरितो जीवयात्रां सजोषः ॥३१२॥

स च कुचेल इति प्रसिद्धः । तस्य पत्नी पतिव्रता बह्वपत्या दिनमनु भिक्षालब्धमन्नं पतिपुत्रेभ्यो विभज्य, स्वयं चावशिष्टं भुञ्जाना चासकृदुपोषिता शुष्कमांसा कष्टदिष्टं सहमाना कथंचिदास्त । सा तावदेकदा पतिमुपगम्य ह्रिया भिया चैवमुवाच—

"नाथ !

"श्रीकृष्णः खलु तव शैक्षमित्रमाढ्यो
"द्वारकयां वसति दयानिधिर्वदान्यः ।
"गत्वा तं कथयसि चेद् दरिद्रवृत्तिं
"नूनं नः स बहु ददीत कामदोऽसौ" ॥ ३१३ ॥

एवमुक्त्वा साऽभ्याशनिशान्ताल्लब्ध-मुष्टि-चतुष्टय-पृथुकं जीर्णवस्त्रखण्डे बद्ध्वा तदुपायनाय प्रदाय तं द्वारकायै प्रस्थापयामास । श्रीकृष्णदर्शनं सर्वथा कुशलमिति मन्वानः कुचेलश्चचाल द्वारकां प्रति ।

गत्वा च तां कथञ्चिद् गुल्मत्रयं अतीत्य हर्म्याणां सहस्राणि सविस्मयं पश्यन् दिष्ट्या प्राविक्षदेकतमम्। तदा तस्मिन्नेव गेहे पर्यङ्कोपविष्टः कृष्णो रुक्मिणीलक्षणाभ्यां चामरहस्ताभ्यां वीज्यमानो द्वारदेशे सखायं प्रावीक्ष्य तत्क्षणमेवाभ्युत्थाय तं सभाजयन् अन्तर्नीत्वा स्वपर्यङ्के न्यवेशयत्। तदनु स्वयमेव तत्पादावनेजनं कृत्वा मधुपर्कादिभिरभ्यर्च्य, मिष्टान्नभोजनैर्भोजयित्वा वरासने सूपवेश्य, तस्याध्वश्रान्तिशान्तये पादौ संवाह्य पत्नीभ्यामावीजयन् कुशलमप्राक्षीत्—

"अपि कुशलं ते सखे कुटुंबवर्गे
"विषयसुखेच्छां विना करोषि वृत्तिम्।
"अपि कुरुषे कर्मणां ततिं विशुद्ध्यै
"गुरुकुलवासश्च ते स्मृतो किमस्ति? ॥ ३१४ ॥

"एकदा तावत्काष्ठाहरणाय गुरुपत्न्या प्रेषितानां शिष्याणामस्माकं विपिनं प्रविष्टानां विभाकरोऽपि भगवानस्मद्विमुख इव निर्दयमस्तगिरिशिखरोपकण्ठसेवोत्कण्ठो बभूव। तदा—

"वलाहकघटा भृशं वटपुरन्धकाराधृताः
"पयःप्रवहकर्पितास्तत इतो भ्रमन्तो वयम्।
"कथंचिदपि तां निशां च विपिनेऽत्यगामापदं
"परस्पर-करग्रहाः पवननाडिताः पीडिताः ॥ ३१५ ॥

"प्रभातायां विभावर्यां विदितवृत्तान्तो गुरुः शिष्यान्वेषी दिष्टेन दृष्ट्वाऽस्माननुकंपयाविष्टः प्रसन्नः गुरुभक्तिं प्रशंसन्ननुजग्राह नः—

"प्रीतोऽस्मि यन्मम कृते बहु कष्टमासीत्
"प्राप्ता भवन्तु सुमनोरथ-गाथया वः।

"जैवातृका भवत पुण्यकृतश्च यूयं
"विद्या च वो भवतु नित्यमयातयामा' ॥ ३१६ ॥

"इति गुरोरनुग्रहवचांसि स्मरसि किम् ? गुरोरनुग्रहादेव पुरुषः पूर्णकामः प्रशान्तचित्तश्च भवति"। इत्युक्तवति कपटमानुषवेषजुष्टे कृष्णे निपुणधिषणः कुचेलः प्रत्यभाणीदिमा वाणीः—

"तत्रभवतो भवतो भाषितमशेषमानुष-सामान्ये सुष्ठु संगच्छते।

"प्रथमो गुरुर्जननतो भवेत्पिता
"त्वथ विद्यया भवति पाठको गुरुः।
"सकलात्मनां भवति चात्ममोक्षदो
"भगवान् भवान् गुरुतमश्च शाश्वतः ॥ ३१७ ॥

"श्रुतय एव भवतः कलेवरं
"सकल-मङ्गलपदं पदांबुजम्।
"गुरुकुले वसतिरत्र कैतवं
"मनुजतश्च पठनं विडंबनम्" ॥ ३१८ ॥

एवं ब्राह्मणवरेण्य-वदनात् सूक्ष्मतत्व-भरित-ब्राह्मीं निशम्य सन्तोषजुष्टः कृष्णो बभाषे सजोषं धिषणसदृक्षक्षितिसुरवरम्—

"सुदामन्, प्रियवयस्य!

"अहं नैव प्रीतो बहुधनसुतैः स्फारविद्या-प्रकर्षैः
"न चेज्याग्र्यैः साङ्गैः प्रवचनतपः-कर्मयोगैश्च सांख्यैः।
"न दानैः पूर्तैर्वा प्रतिफलधिया लोककामात्कृतैर्वा
"शुभक्तिश्रद्धाभ्यां शुभफलजलैः प्रीतिमाप्नोमि दत्तैः॥३१९॥

"किमिहाहृतं तव गृहादथ मे
"प्रिय! देहि मे भवति तद्धविकम्।
"भवमस्त्वदभ्र-मधुरो हि भवेद्
"यदि दीयते सुहृदयेन मुदा" ॥ ३२० ॥

इत्यत्यन्तादरप्रीत्या प्रार्थयति निखिलाभ्यर्हण-भुजि भगवति सति, सुदामा मोक्षमार्गैक-प्रवणः स्थिरप्रज्ञः अर्थकामविमुखः काम्यफलावाप्तये भार्याप्रेपितमुपप्राप्तं भगवते समर्पितुमक्षमः लज्जितस्तददानः अवाङ्मुखस्तूष्णीमतिष्ठत्। तदा सकलभूतहृदय-वेदी दामोदरः कुचेलाशयं पृथुकानयनं तत्पत्नीकांक्षितं च विद्वान् कुचेल-कुचेलग्रन्थिं स्वयमेव लघु गृहीत्वा "किमिदं वयस्ये"ति वदन्नेव विमुच्य पृथुकतण्डुलमुष्टिमादाय, "नन्विदं प्रीत्या तव पत्न्या प्रेपितमुपायनम्? इदं मां च सकललोकांश्च प्रीणयेदि"ति सादरं व्याहरन्नेव विप्रवधूवाञ्छासमधिकं दातुकामो मुखे क्षिपन्नभक्षयत्। द्वितीय-मुष्टिग्रहणप्रवणं रमणं वीक्ष्य रुक्मिणी तूर्णमभ्यर्णमेत्य तत्करमग्रहीत। रमणं चाभाणीदेवम्—

"अलमिदं यदिहाचरितं त्वया
"विसृज माधव मुष्टिमिमां तु मे।
"द्विजवरस्य कृताः पुरुसंपदः
"भविक-भाग्य-चयाः सुखवर्धकाः" ॥ ३२१ ॥

सुदामा तावद्गोविन्दमन्दिरे मिष्टान्न-भोजन-मृदुल तल्प-शयनादि भोगान् स्वर्गभोग निभाननुभवन्, तन्निशां सानन्दमत्यगात्। प्रभातायां तु शर्वर्यामुत्थाय निर्वर्तित प्रातः कृत्यः कृष्णेन सभाजितः स्वगृहं प्रति प्रतस्थे स विप्रवर्यः। सुदूरमनुगतेन हरिणा प्रेम्णाऽऽलिंगितः कृच्छ्रेण व्यसर्जि ॥

अथ गच्छन् कुचेलः पथि स्वयमचिन्तयदेवम्—

"कृष्णस्य वीक्षण-सुभाषण-तोषणाद्यै-
"र्धन्यो भवामि परमां मुदमेत्य नूनम्।
"उद्दिष्ट-कार्य करणे त्वभवं सुमन्दो
"वक्ष्येऽथ किं गृहगतो गृहिणीं सुदीनाम् ॥ ३२२ ॥

"किमहं जायासन्देशं सुतरां व्यस्मरम्? न हि पृथुक-प्रसंगेनापि स्मारित एव। किमहं वित्तं नायाचिषि? न केवलं लज्जया वारितः। किंतु महाविभव-परिवृढोऽपि स्वयं परमार्थतत्ववित्सन् विषयसुखविमुखतैव श्रेयसीति मामवोचत्। तथैव च ममापि चित्तवृत्तिः। एवं सति तद्वैपरीत्येन निकृष्टामैहिक-संपदं कथं याचेय? लब्धवैकुण्ठ-दर्शनः कोनु भूलोक-भवसुखमसारमिच्छेत्? किं चाहं पूर्वजन्मसु हरिमैहिकाभ्युदयेच्छया नाराधितवानिति स एवाभिदधे। एवं च यथापुरमहं भवामि। भूरिसुकृतवातेनैव तद्दर्शनमविन्दम्। अतो नितान्त-सन्तोष-जुष्टो भवामि।

"तदास्तां तावत्—

"वित्तं याचितुमत्र विस्मृतमिति प्रोक्ते त्वसत्यं भवेत्
"लज्जाकारणतो नयाचितमिति प्रोक्तेऽत्र जाड्यं स्फुटम्।
"वर्जित्वैतदियां न चेत्स्वभवनं भार्यादि-नाशो ध्रुवं
"तस्मात्सत्यमहं ब्रवीमि गृहिणीं यद्वा भवेदस्तु तत्" ॥३२३॥

इथं दृढीकृतचित्तोऽयं स्वग्राममभीमानमाममाद। तत्र विकच-कुवलय-कमल-विलसत्सरोवरसनाथमुद्यानं विभ्राजमान-विमानोपेत-हर्म्यं च नेरीक्षमाणः किमहं मनोरथ - संचारी मार्गभ्रान्त्या ग्रामान्तरमगममिति

चिन्तासन्तानितान्तःकरणो भूत्वा परिभ्रमन्तं सुदामानं गीतवादित्रैः सत्रागत्य शिविकायामुपवेश्य वहत्सु पुरुषेषु सत्सु—

दासीजनैः परिवृता सुमगन्धमाल्यै-
र्गत्वा तदीय-गृहिणी नवयौवनाढ्या ।
आनन्दपूर्ण-हृदया रमणीय-गात्रा
संश्लिष्य तं भृशतरं स्वगृहं निनाय ॥ ३२४ ॥

सुदामा तां रमामिव विराजमानां निशाम्य प्रत्यभिज्ञामविन्दमानो भृशविस्मयभागभूत्। तदनु प्रविष्ट-पृथिवीशोचित - वेश्मोत्तमो निशाम्य व्यजनादीनि परमात्मने पृथुक-मुष्टि-प्रदानेन समृद्धिरियती समजायतेति कृतज्ञतया तं स्मारं स्मारं हर्ष-प्रकर्ष-जुष्टो, विषयसुखसामग्रीसंपन्नोऽपि विजितेन्द्रियो, गृहस्थोऽपि विगतरागः, परिमित-मर्त्य-भोगभुक्, सर्वभूतेषु कृपापूरितहृदयः प्रतिदिनमचिन्तयदेवम्—

"नाहं किंचिदवीविदं निजदशां नासौ किमप्यूचिवान्
"एतर्ह्यप्यतिवैभवेन भगवान् संयोजयामास माम् ।
"सर्वेषां हृदयेप्सितं स हि विदन् साध्नोति कालोचितं
"तच्चित्तं त्विह कीदृशं कथमिति ज्ञातुं न शक्यं जनैः॥३२५॥

"श्रीशेन कृष्णेन कृपालुना सता
"भूयात्सुसख्यं जनिपूत्तरास्वपि ।
"भक्त्युद्भवायैव न राति संपदं
"दर्प-प्रशान्त्यै च हरत्यसौ धनम्" ॥ ३२६ ॥

समस्तकार्येष्वपि केशवं स्मरन्
समस्त-भूतेषु दयापरोऽभवत् ।
हरेरधीनं सकलं ह्यमंस्त सः
विधूय पापं परमं पदं ययौ ॥ ३२७ ॥

एवं भक्तजनाभीष्टं सदा साध्नोति माधवः ।
परमाद्भुत-कार्याणि बहूनि कुरुते क्षितौ ॥ ३२८ ॥





केषाचिन्निर्धनानां बहुवितरणैः कारयेदेव भक्ति
स्फारैश्वर्योत्पथानां विभवहरणात्कल्पयत्येवशान्तिम् ।
दुर्दान्तानां जनानामसुविशसनाद्यच्छति ह्येष मुक्तिम्
सुब्रह्मण्यो ददेऽस्मै पदसुमकृतां सप्तमीं चित्रमालाम् ॥ ३२९ ॥





वृन्दारण्यग-कल्पपादप-तले भद्रत्नपीठेऽम्बुजे
शोणाभे वसुपत्रके स्थितमजं पीतांबरालंकृतम् ।
जीमूताभमनेकभूषणयुतं गोगोपगोपीवृतं
गोविन्दं स्मरसुन्दरं मुनियुतं वेणुं रणन्तं भजे ॥ ३३० ॥

(मन्त्र-महोदधि)





तमीश्वराणां परमं महेश्वरं
तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद्-
विदाम देवं भुवनेशमीड्यम् ।।





# कृष्णोल्लासः



अष्टममाला



## ऐश्वर्योल्लासः



पौण्ड्रक —

आसीत्तदा करूषनृपतिः किल पौण्ड्रकाख्यः। सो भूत्वाऽप्रतिमविष्णुभक्तश्चिरं ध्यात्वा रूपं विष्णोस्तपस्तप्त्वाऽनेकधा प्रसभं, विष्णावेव सर्वथा समर्पितः सन्, कालान्तरे विष्णोरिव चतुर्भुजस्वरूपं च कुटिल-गदारिशंखपद्मानि च प्राप। तदा स्वमेव नाम विष्णुं मत्वा च, विस्मृत्य परमपुरुषं, त्रैलोक्याधो वपुष्मानिव संमूढचेतसा किंकर्तव्यता-मूढो भुवि स्वयमवतीर्णं कृष्णरूपेण द्वारकावासिनं विष्णुमसहमानः, "अहमेव हरिर्भुवि न तु वासुदेवो" इत्थं ब्रुवन्, हरये प्रजिघाय दूतम्—"यदि कृष्णो वैष्णवचिह्नानि झटिति न त्यजति तर्हि मया सह युध्यतु" इति।

दूतमुखेनासादितमिमं विचित्रसन्देशं श्रुत्वा सभायामुग्रसेनादयो भृशं जहसुरुच्चैः॥

तदवलेपनलोपं चिकीर्षुः कृष्णः संगरेऽरिणा तं हत्वा, तस्यासुरं सौम्यं निर्धूय, तस्य च पौण्ड्रकस्य पुरा आचरिततपसा परिपूतमात्मानं स्वीकृत्य स्वात्मन्येव दधे॥

कपटद्यूतम्—

पाण्डववैभवदर्शन-दुःखित-कौरव-कुधवः, मातुलेन शकुनिना प्रेरितः, युधिष्ठिरं कपटद्यूते पराजित्य, भ्रातृ-भार्या-सहित-तत्सर्वस्वमपजहार। तदा दुःशासनो द्रौपदीं केशग्राहं गृहीत्वा आकृष्य सभायामवमन्तुं तद्वस्त्रमपहर्तुमारेभे। तदा कृष्ण-प्रसादेन कृष्णाया वस्त्राणां निरन्तरपरंपरा प्रादुरासीत्। अथ गुरुजन-सन्देशेन कृष्णरक्षितां कृष्णां तां विसृज्य, पाण्डवेभ्यो द्वादशवत्सरान् वनवासः, ततः परं वत्सरमेकमज्ञातवासश्च कार्यं इति निश्चयं विधाय, अज्ञातवासे ज्ञाताश्चेत् पुनरपि पूर्ववद्वनवासादिकं कार्यमिति च निर्णीय ते प्रहिताः स्वातन्त्र्येण कौरवैः।

ते च वनं गत्वा दिवाकरप्रसादादक्षय-पात्रं लब्ध्वा चाभ्यागतान् भोजयित्वा जीवयात्रां कुर्वाणा आसन्। द्रौपदी-भोजनानन्तरं पात्रे प्रक्षालिते तद्दिने नान्नलाभः स्यात्। इदं तत्वमाज्ञाय दुर्योधनो दुर्वाससं शिष्य-सहस्र-सहितं पाण्डवनाशमिच्छन् अपराह्णे पाण्डवाभ्याशं प्रेषयामास। तथाऽकरोन्मुनिः। तस्मिन् स्नानाय नद्यां मज्जति सति, द्रौपदी-ध्यानात्तत्रागतः कृष्णः पात्रलग्नशाकलवं चुलुकजलेन बुभुजे। तेन समस्तलोकतृप्तिरजनि। दुर्वासाश्च परिपूरिततुन्दः कृष्णमहिमेति ज्ञात्वाऽपागात्।

एवं भक्तरक्षणचणस्य सर्वथा जागरूकस्य कृष्णस्य अनुग्रहपरकृपाकटाक्षात् पाण्डवा वनवासं समाप्य विराटनगरे चाज्ञातवासं कृत्वा, सुयोधनं पैत्र्यं राज्यमप्राक्षुः। तेन प्रत्याख्याता भारतसमरमारभन्त। यस्मिन् कृष्णः पार्थसारथ्यं कुर्वन्, तत्र समरसमारंभे बान्धवानां सुहृदां च पुरतः समराङ्गणे वर्तमानः अर्जुनोऽकस्मात्सञ्जातपुलकरुणस्त्यक्त-सर्वायुधः युद्धाद्विरन्तुकामो विषादयोगादाकुलितचित्तः

समरभुवो रथमपनेतुं सारथिं कृष्णं चोदयामास । तदा सर्वज्ञो भगवान् अर्जुनद्वारा सर्वान् सुधर्मे प्रतितिष्ठापयिषुः सर्वधर्मसंग्रहरूपां दिव्य-गीतामुपनिषदमुपादिक्षत् ।



भगवद्गीता—

"क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
"क्षुद्रं हृदय-दौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ II, 3 ॥ ३३१ ॥

"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
"मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ II, 47 ॥ ३३२ ॥

"बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
"तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ II, 50 ॥३३३॥

"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
"वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ II, 56 ॥ ३३४ ॥

"आपूर्यमाणमचलप्रतिष्ठं
"समुद्रमापः प्रविशन्ति यद्वत् ।
"तद्वत्कामा यं प्रविशन्ति सर्वे
"स शान्तिमाप्नोति न कामकामी ॥ II, 70 ॥ ३३५ ॥

"मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
"निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ III, 30 ॥ ३३६ ॥

"एवं बुद्धेः परं बुद्ध्वा संस्तभ्याऽऽत्मानमात्मना ।
"जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ III, 43 ॥ ३३७ ॥

"तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
"छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ IV, 42 ॥ ३३८ ॥

"नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
"पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन् ॥
V, 8 ॥ ३३९ ॥

"भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
"सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ V, 29 ॥ ३४० ॥

"ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
"युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ VI, 8 ॥ ३४१ ॥

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
"ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ VI, 29 ॥ ३४२ ॥

"यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
"तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ VI, 30 ॥ ३४३ ॥

"यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
"तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ VII, 21॥३४४॥

"तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
"मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ VIII, 7 ॥३४५॥

"कविं पुराणमनुशासितार-
"मणोरणीयांसमनुस्मरेद्यः ।
"सर्वस्य धातारमचिन्त्यरूप-
"मादित्यवर्णं तमसः परस्तात् ॥ VIII, 9 ॥ ३४६ ॥

"यदक्षरं वेदविदो वदन्ति
"विशन्ति यद्यतयो वीतरागाः ।
"यदिच्छन्तो ब्रह्मचर्यं चरन्ति
"तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ VIII, 11 ॥ ३४७ ॥

"पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
"तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ IX, 26 ॥ ३४८ ॥

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
"यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ IX, 27 ॥ ३४९ ॥

"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
"मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ IX, 34 ॥ ३५० ॥

"अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
"अहमादिश्च मध्यं च भूतानामन्त एव च ॥ X, 20 ॥ ३५१ ॥

"तस्मात्त्वमुत्तिष्ठ यशो लभस्व
"जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।

"मय्येवैते निहताः पूर्वमेव
"निमित्तमात्रं भव सव्यसाचिन् ॥ XI, 33 ॥ ३५२ ॥

"संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
"मय्यर्पित-मनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ XII, 14 ॥ ३५३ ॥

"अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
"सर्वारंभ-परित्यागी यो मे भक्तः स मे प्रियः ॥ XII, 16 ॥ ३५४ ॥

"यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
"शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥
XII, 17 ॥ ३५५ ॥

"समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
"विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥
XIII, 27 ॥ ३५६ ॥

"मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
"स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ XIV, 26 ॥ ३५७ ॥

"सर्वस्यचाहं हृदि सन्निविष्टो
"मत्तः स्मृतिर्ज्ञानमपोहनं च ।
"वेदैश्च सर्वैरहमेव वेद्यो
"वेदान्त-कृद्वेदविदेव चाहम् ॥ XV, 15 ॥ ३५८ ॥

"तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
"ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥ XVI, 24 ॥ ३५९ ॥

"अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
"स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥
XVII, 15 ॥ ३६० ॥

"काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
"सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ XVIII, 2 ॥ ३६१॥

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
"भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥
XVIII, 61 ॥ ३६२ ॥

"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
"अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" ॥
XVIII, 66 ॥ ३६३ ॥

एवं सर्व-वेदान्तसारभूतं पारमार्थिकतत्त्वं सुष्ठु प्रबोध्य अर्जुनं युद्धायाज्ञापयामास । भारत-समरं निमित्तीकृत्य धर्मसंस्थापनार्थमवतीर्णो भगवान् सर्वज्ञः कृष्णः दुःसहं भुवोभारमपजहार । धर्मनिघ्नान् कौरवान् नामावशेषान् समरहतान् सपिण्डीकृत्य धर्मिष्ठान् पाण्डवान् राज्यभारे नियम्य च स्वयमपि स्वपुरीं द्वारकां गतः कृष्णः ॥

सूर्योपरागः—

सूर्योपराग-पुरुपुण्यदिनस्य योगे
नानास्थलीय-सुजना बहवो मिलित्वा ।
स्नात्वाऽत्र ते परशुरामपवित्रतीर्थे
पापान्यपोह्य पितृतर्पणमाचरन्ति ॥ ३६४ ॥

पितुर्हननरोषतः परशुधारया क्षत्रियान्
त्रिसप्तगुणितानहन् रुधिरतर्पणं सोऽकरोत् ।
अघस्य परिमार्जनं पुरुपवित्रतीर्थेऽत्तनोत्
ततःप्रभृति पुष्करं परशुरामनाम्नोच्यते ॥ ३६५ ॥

तत्र मिलित-सुकृत-कर्म-प्रवणा जनाः स्नान-तर्पणादीनि कृत्वा, भूयांसि गो-धन-वासांसि भूसुरवरेभ्योऽस्पर्शयन् । चिरदिष्टाद् दृष्ट-बन्धु-मित्रवर्ग-प्रेक्षण-संभाषणादिभिर्मिथस्तोषयन्तः सजोषमतिष्ठन् । तथा च द्रौपदी-सुभद्रादयः कृष्णमहिषीभिः साकं संभाषमाणा आसत। यशोदादि-व्रजयोषितो देवकी-रोहिणीभ्यां सार्धं संलपन्त्योऽवतिष्ठन्त ।

कृष्णरताः—

गोप्यो हरिं नयनगोचरभूतमाराद्
नीत्वाऽऽदराद्धृदयपंकजमर्हयन्त्यः ।
कृत्वा रहोऽत्र बहुधा परितोषिताश्च
प्रापुर्मुदं दयित-दर्शन-लब्ध-मोदम् ॥ ३६६ ॥

हरिरमूः समुचितरीत्या तत्त्वज्ञानं बोधयन् भाषयन् तोषयन् मन्द-हास-करुणापूरित-कटाक्ष-वीक्षणैः समाधानपूर्वमानन्दसागरे व्रजयोगा-मतल्लिकाभ्यः हर्षप्रकर्षमातनोत् ॥

तथा नानादेशेभ्योऽभ्यागतांस्तपोधन-वृषभान् सभाजयित्वा प्रणति-पुरस्सरं सप्रश्रयं मधुरगंभीर-भारतीमेवमभाणीत् कृष्णः—

"अहो ब्राह्मण-वरेण्याः! तत्रभवतां भवतां सन्दर्शनेनात्यर्थ-कृतार्थमात्मानमहं मन्ये ।

"तीर्थानि बिंबान्यनलो रविर्भू-
"श्चिरेण पंकानि पुनन्ति नो वा ।
"योगेश्वराणामिह दर्शनन्तु
"प्रभूतपापानि दहत्यरं नः" ॥ ३६७ ॥

मुनिपुंगवाः कृष्णं प्रत्यभापन्तेत्थम्—

"जगदवनसवाग्रये विचक्षणदीक्षित !
"सकलजनहृदब्जे करोपि नियन्त्रणम् ।
"अपहृतदुरितस्त्वं पुनासि मुनीनरम्
"त्वदुदितवचनं नो भवेदुपचारकम् ॥ ३६८ ॥

यज्ञ :—

अथ ते ऋपयः सजोपं कृष्णमाभाप्य निर्गमिप्यन्तोऽऽनकदुन्दुभिना सत्कृताः सन्तः, "कर्मणा कर्म-निर्हारो यथा स्यात्तदुच्यताम्" इति पृष्टाः सन्तश्च तस्मा इत्थमुत्तरं प्रददुः ।

"अहो चित्रं ह्येतद्यदिह मनुपे जगत्पतिमात्मजं
"परं श्रेयोमूलं करमुपगतं त्यजन् वहु मुह्यसि ।
"पवित्रं गंगाया जलमिह जहञ्जलान्तरमेपि तं
"नराणां नैकट्यं भवति कुशलेऽप्यनादरकारणम् ॥ ३६९ ॥

"किमिति किमिति ! स्वारोहारोपितशिशुं कुत्र कुत्रेति प्रतिविशिखं प्रतिवेश्म चान्विप्यन्त्या ग्रामाङ्गनाया भङ्गीमङ्गीकुर्वाणस्य तव दशा भृशं शोचनीया खलु" ।

इति भापितस्यान्तरङ्गाभिप्रायमनभिजानन्तं, विष्णुमायया समीपस्थस्य कृष्णस्य विष्णुत्वं विस्मरन्तं, समापसमूहमध्यवसितं तमध्वरचिकीर्पुमानकदुन्दुभिं समीक्ष्य, ते ऋपयस्तमध्वरे गैव परमपुरुपाराधने न्ययौक्षुः ।—

"यज्ञे शास्त्रोक्ते मृदितमलहृदा विष्णुं यजस्वादरात्
"धर्म्यः कल्याणः सुविमलयशसां हेतुर्महानध्वरः ।
"पाठाद्यैर्यज्ञैर्नृ-मुनि-सुर-पितॄन् जन्तूंश्च तृप्तान् कुरु
"त्वं मुक्तो वन्धात् परमपदगतौ दिष्टेन योग्यो भवेः" ॥ ३७० ॥

इत्थमादिष्टो वसुदेवस्तानेवाध्वराध्वर्यून् धृत्वा बान्धवैः सह बहुविभवैरध्वरवरं निर्वर्त्य परशुरामतीर्थे कृतावभृथस्नानकृत्यः कृतार्थमात्मानममनुत। तदनु बन्धु-मित्र-कलत्रैः सत्रा त्रीन्मासांस्तत्रोषित्वा, भूयिष्ठपारितोषिकैस्तोषयित्वा सादरमभिनन्द्य, नन्दादिगोपान् घोषाय प्रेष्य, वृष्ण्यन्धकादिभिरानकदुन्दुभिर्द्वारिकां प्रत्याजगाम।

तदा कस्मिंश्चिद्दिवसे वसुदेवो निजनन्दनावभिवन्दमानौ सानन्दमभिनन्द्य मुनिवृन्दारकवृन्दवाचमनुस्मरन्, प्रसूत्यनेहसि शिशोः शंख-चक्र-गदा-पद्म-मण्डित-दोर्दण्ड-चतुष्टय-दर्शन-भाषणानि च ध्यायं ध्यायं, तयोः शैशवात् प्रभृति परमाद्भुत-वीर्यकर्माणि च स्मारं स्मारं, वरुणकृत-वरिवस्यां स्तुतिं च मानसे कारं कारं, तौ प्रधानपुरुषाविति संजात-दृढप्रत्ययः सन्, तत्त्वज्ञानोदयनिमित्तात्यक्ततदर्भकबुद्धिः कृष्णं सजोषं तुष्टावैवम्—

"स्वसात्सृष्ट्वा विचित्रं जगदिदमखिलं त्वं पुनः प्राविशस्तत्
"मात्रा भूतानि चान्तःकरणमसुतति-ज्ञान-कर्मेन्द्रियाणि।
"त्वद्रूपाणीति सत्यं त्वमधिकरणमस्यस्य चान्ते निधानं
"सर्वान्तर्यामिणस्ते सकलमपि वपुर्जीववर्गं बिभर्षि॥ ३७१॥

"ज्योतिषामुदरे सुषमा त्वं सृष्टि-लय-स्थितिकारणं
"विष्टपस्य परे दिवि तिष्ठस्यात्ममनोवचसां परे।
"दुर्लभं नरजन्म च लब्ध्वा त्वां मम सूनुममंसहो
"आत्मतत्त्व-पराङ्मुख एवानैपमशेष-समा मम॥ ३७२॥

"अतस्त्वं मायामपनय, छिन्धि मे मोहपाशान् शरणागतोऽस्मि"
इत्यभिहितवति पितरि, वासुदेवोऽमुमाचष्टैनम्।—

वसुदेवाय ज्ञानोपदेश —

"परमात्मा सत्यो नित्यो महतो महीयानणोरणीयान्, सर्वगतः सर्वज्ञः सर्वशक्तः स्रष्टा पाता च विभुः। स परश्चापरश्च। अपरः प्रकृत्या स्थूल-सूक्ष्म-भूत-भेदान् सृष्ट्वा तेषु प्रविश्याऽन्तर्यामी सन् सर्वसाक्षी भवति। जीवात्मानस्तस्य परा प्रकृतिः तस्यांशाः। ते विस्फुलिंगा इव प्रदीपादानिर्भूय, तस्य पराप्रकृतिजन्य-भूतेषु तत्तदाकारानुसारेण व्याप्य, पूर्वावस्थां ज्ञानं च विस्मृत्य,तत्तद्देहाविर्भाव तिरोभाव-परिणामादीनि स्वीयानीति मन्यमाना मुह्यन्ति। यतः प्रकृतिनलयप्रवेशकाल एव लिंगशरीरेणावृता भूत्वा, स्वज्ञानस्य संकोचमाप्नुवन्ति। स्वस्वरूपं विस्मरन्ति च।

एवं विधो जीवो लोहपाषाणरूपेण जडत्वमापन्नश्चिर तिष्ठन्, तदनु किंचिद्विकसितचैतन्येन तृण लता-तरवश्चिर भूत्वा, कालेन संभूतानुभवैश्वर्यवशात् क्रिमि कीटोरग पतत्रि मृगादयो भूत्वा, विजृंभितैश्वर्यः स मानवजन्म लभते यत्र वाग्धीन्द्रिये प्रादुर्भवतः। तत्र किरात पुल्कसादयो मृगविशेषा मानवजन्मजीवयात्रा कुर्वन्ति। क्रमेण सत्कुले जातो जीवः बाल्य-कौमार-यौवनावस्थासु ज्ञानोत्पत्तेरनवकाशवानेव स भवति। अथ दुःखानुभवजन्य वैराग्ययुतो ज्ञानोन्मुखो भवति। तव कारागृहवासो वैराग्यकारणम्। अध्वरस्तव दुरितक्षयकरः। मुनिसत्तमसंसर्गो ज्ञानोदयहेतुः। एवं त्वमद्यैव ज्ञानयोग्यो भवसि। इतः पर तव ज्ञानम् उपर्युपरि वर्धेत। अत एतावत्पर्यन्तं कालो व्यर्थोऽतीत इति मा शुचः। यतः सुखदुःखसंमिश्रानुभवनिवर्हैर्वृथा कालो नष्ट इत्यपि मा शुचः। किंतु तस्मादपि संजायमान-परिपाकतयोद्भूत विवेकप्राप्त्या परमार्थज्ञानोदयो भवति।

"परः परमात्मा नैव ज्ञातुं शक्यः। तस्मात्साक्षाद्भूत-प्रत्यक्षमहिमानमेव उपास्स्व। ततः पर क्रमेण सायुज्य-भाग्यमपि करतलगतं भवति॥"

इति तत्त्वज्ञानगर्भितां भगवद्भारतीमाकर्ण्य वसुदेवोऽतीव सन्तुष्टस्तूष्णीमानन्दबाष्पबिन्दु-सन्दोहं निष्यन्दमानश्चिरदिष्टमतिष्ठत्सजोषम् ॥

ज्येष्ठभ्रातॄणां पुनरुज्जीवनम्—

एकदा देवकी—

श्रावं श्रावमतीव वीर्यचरितं कृष्णस्य रामस्य च
श्रुत्वा चात्र मुनीन्द्र-भाषितगुणं भूयिष्ठ-माहात्म्यकम् ।
आचार्याय परासु-सूनुलभनं श्रुत्वा च भर्तुर्मुखात्
कंस-प्रोथित-पुत्रषट्कमिलनं माता ययाचे सुतौ ॥ ३७३ ॥

सांप्रतमेव रामकृष्णौ रसातलं गत्वा बलिनाऽभ्यर्हितौ वरासने चोपवेशितौ । अथ हरिस्तमादिदेश चेत्थम्—

"तुष्टौ बले सुहृदयंगम-पूजयाऽऽवां
"ऊर्णासुतान् द्रुहिणशापवशादसुर्याः ।
"योनिं गतान्पुनरिमान्ममातृगर्भं
"नीतानिहानय नयै मम मातृतृप्त्यै ॥ ३७४ ॥

एवमादिष्ट-महाबलिना सपदि चाहूत-सोदरैः सार्कं द्वारकामागत्य तान्मात्रे ददतुस्तौ । सा च सुप्रीता तनयवात्सल्यपरवशा तान् मूर्धन्याघ्रासीत् । ते तावत् हरिहस्त-संस्पृष्ट-वपुषः शापान्मुक्ताः स्मृतनिजरूपाः पितरावीश्वरौ च प्रदक्षिणीकृत्य प्रणिपत्य च मिषतामेव सर्वेषां स्वं धाम जग्मुः ॥

श्रुतदेवः, बहुलाश्वः—

कालेऽस्मिन् मिथिलापुरे द्विजवरः श्रीकृष्णभक्तोत्तमः
सन्तुष्टः सुलभार्जिताल्पविभवैर्जीवन्गृहस्थाश्रमे ।

ज्ञानी दान्त-नितान्त-शान्त-हृदयः कर्माणि कुर्वन् कृती
नाम्नाऽसौ श्रुतदेव ऐहिकसुखेष्वासक्तिहीनोऽवसत् ॥३७५॥

तत्काल एव विषयेष्वलंपटो
भक्ताग्रणीर्विमलकीर्तिमान् गुणी ।
ज्ञानी मनोज्ञ-मिथिलापुरे सुधीः
राजा शशास बहुलाश्वनामकः ॥ ३७६ ॥

एतयोः प्रसन्नो दर्शनदित्सुः केशवः कतिपय-परार्घ्य-तपोधन-रत्नैः समं स्यन्दनमारुह्य गच्छन्, मध्येमार्गं करधृतोपग्राह्यान् प्रतीक्षमाणान् जानपदजनान् कृपाकटाक्षवीक्षणैस्तोषयन्, स्वयशःप्रशंसा-वचांसि श्रवसोः पतन्ति शृण्वन्, पुरं प्राप्य द्वारि करगृहीताभ्यर्हणद्रव्यान् पौरानद्राक्षीत् । तदा—

द्वारस्थाः पुरवासिनः करतले पूजार्ह-सामग्रिकाः
सानन्दं हरिवीक्षणे कुतुकिनो बद्धाञ्जलीभूय ते ।
शीर्ष्णि न्यस्तकराः प्रहर्ष-भरिताः संवीक्षमाणा भृशं
श्रीकृष्णं मुनिपुंगवांश्च नितरां भक्त्या प्रणेमुर्मुहुः ॥ ३७७ ॥

अथैकत्र बद्धाञ्जलिर्बहुलाश्वोऽन्यत्र साञ्जलिः श्रुतदेवश्चातिथ्याय युगपदभ्यर्थयिष्येते । इति विद्वान् माधवस्तयोरुभयोरप्यविरोधेन योगमायया काययुग्ममादाय, विभक्त-मुनिगणः सन्, उभयोः पुरतः स्थित्वा तयोरातिथ्यं युगपदुररीचकार । उभावपि स्वस्वं गृहमागतः समुनिगणः कृष्ण इति मेनाते ।

अथ हरिं स्वगृहं नयन् महीशः
समुनिसचममातिथेय-कृत्यैः ।

पदसरोज-रजोव्रजं स तेषां
स्वसदने पुरुपावनं स मेने ॥ ३७८ ॥

आनन्दबाष्पनयनो नृपतिः सभार्यः
प्रक्षाल्य कृष्ण-पदपंकजमादरेण ।
प्रोक्ष्य स्वयोः शिरसि गन्धसुमाक्षतैस्तत्
स्वभ्यर्च्य जन्म सफलं ध्रुवमित्यमंस्त ॥ ३७९ ॥

ततो मुनिसत्तमांश्च पाद्यार्घ्याचमनीयाद्यैः संपूज्य, सर्वानपि मधुरया भारत्या प्रीणयन्, स्वविभव-समुचित-सुभक्ष्य-भोज्य-फलैः सादरं सोपचारं च भोजयामास महीशः । तदनन्तरं वरासनेषु सर्वानुपवेश्य, श्रीकृष्णचरणौ स्वाङ्के निधाय, संवाहयन्, जगाद चैवम्—

"सर्वेषामन्तरात्मा त्वमसि परमः सर्वसाक्षी त्वदृष्टः
"भक्ताः प्राज्याधिकाः स्युः फणि-विधि-रमा तार्क्ष्यतोऽपीति वाचम् ।
"सत्यां कर्तुं त्वमागा भवनमिह मे दर्शनं च प्रदत्से
"प्रेष्ठो भक्तस्य वश्यस्तवगुणमिमं को विदंस्त्वां विजह्यात् ? ॥३८०॥

"नितान्तशान्ततपोधनानामपि त्वमात्मदो वृष्णिवंशमलंकरोषि । सार्ववर्णिकभवभयापनोदनप्रवणः प्रवर्तसे" ॥

अथ—

कृष्णं महामुनिगणं च नमन् ययाचे
"स्वामिन् मदीय-सदने मुनिभिः समेतः ।
"वासं कुरुष्व दयया मदनुग्रहाय
"प्राज्यान्दिनानि"ति मुदा विनयेन भक्त्या ॥ ३८१ ॥

भूदेवोऽथ हरिं निरीक्ष्य नितरामानन्द-सन्दोह-झ-
र्युत्सेकं प्रमदेन तुंदिलवपुर्यन्तुं न शक्तोऽभवत् ।
दर्शं दर्शमथापि नाप सुतरां तृप्तिं हरेर्वीक्षणे
वामःपाणिरमौ ननर्त सुचिरं भ्रान्तः स्वयं विसस्मरन् ॥ ३८२ ॥

अथ कुशासनेषु निवेशितांस्तान् स्वागतादिना सभाजयित्वा, पत्न्या सह पादावनेजनं कृत्वा, तत्तीर्थं स्वस्य स्वानां च शिरसि प्रोक्ष्य, तुलसी-कुश-दूर्वाङ्कुरकुसुमाक्षतैः सम्यगभ्यर्च्य, फल-जलादिभिः सादरमाराधयामास। अथ कृष्णांघ्रियुगं स्वाङ्के निक्षिप्य, संवाहयन्, व्याजहारैनम्-

"येन त्वं ध्यानकाले हृदयकमले रूपेण मे दृश्यसे
"तेनैवाद्यात्र साक्षात्सदयहृदयः स्वैरं पुरस्तिष्ठसि ।
"भक्तानामात्मदस्त्वं जगति सकलं व्याप्नोषि सत्वं ददत्
"त्वद्दीनं वस्तु न स्यात्तव दृशिगतो निस्तीर्ण-दुःखार्णवः ॥ ३८३ ॥

"कृतज्ञोऽसि भृशं ते यद्ददिवांस्तव दर्शनम् ।
"अकिंचनस्य सर्वस्वं त्वमेव भवसि ध्रुवम्" ॥ ३८४ ॥

भगवानुवाच—

"विप्रैते मुनय इहागता गृहं ते
"मद्भक्तास्त्वदनुजिघृक्षयेति विद्धि ।
"तीर्थार्चा ददति फलं चिरेण नो वा
"संसर्गात् सकलमघं पुनन्ति भक्ताः ॥ ३८५ ॥

"तस्मान्मयि यादृशी भक्तिस्तवास्ति तादृश्या तानर्चय—
"ब्राह्मणो जनुपा वरो विद्यया मुदा तपसा धिया
"भक्तिरस्य च वर्तते यदि सोऽत्र मे दयितोत्तमः ।

"सर्ववेदमयो द्विजोऽपि च सर्वदेवमयोऽप्यहं
"मां द्विजं च तिरस्करोत्यबुधः शिलादिषु भक्तिमान् ॥ ३८६ ॥

"मद्रूपाणि चराचरं जगदिदं तत्कारणानीति यो
"ज्ञात्वा मामनु दर्शनेच्छुरखिलं प्रीत्या च सत्कारतः ।
"पश्यत्यत्र जुगुप्सया विरहितस्सर्वत्र साम्येक्षणो
"विद्वान् तादृश एव भूरि भवति श्रेष्ठश्च मे सर्वथा" ॥३८७॥

निशम्येमां-सुसूक्ष्माग्रय-तत्त्वगर्भित-भारतीम् ।
माधवीयां द्विजश्रेष्ठः प्राप भूयिष्ठ-संपदम् ॥ ३८८ ॥

अथ श्रुतदेवो निर्भर-भक्तिप्रकर्षेण ऋषिनृपभानत्यर्थादरेण च समभ्यर्च्य भूयिष्ठ-सन्तोष-जुष्टान् सजोषमकार्षीत् ।

कतिपय-दिनानत्रोषित्वा कृष्ण ऋषिपुंगवैः सार्धं द्वारकामाजगाम ॥

सन्तानगोपालम्—

आसीत्तदा द्विजश्रेष्ठो गृहस्थो द्वारकापुरे ।
तस्य भार्या प्रियंकर्त्री कदाचित्सुषुवे सुतम् ॥ ३८९ ॥

अथ परमात्मेच्छया तस्योर्वीसुरस्य शिशुर्जातमात्रो ममार । धरणी-धवे धर्मेण धरित्रीं बिभ्रति सति, शिशुमृतिर्न संभवेदिति दृढप्रत्ययवान्, पृथिवीदेवो मृतशावक-शरीरमादाय, पृथिवीपति-प्रासाद-द्वारपुरतः प्रक्षिप्य, दुःसहदुःखभरेण पुरुरुदन्, भूभृतं भृशं भर्त्सयन् चिरादिष्टमतिष्ठत् । एवं वत्सरे वत्सरे जातं जातं मृतं मृतमर्भक-देहं वसुधाधिपस्य सौधाभ्याशे क्षिपन्, विलपन्, क्षितितले लुठन्, शीर्ष्णि वक्षसि च ताडयन्, क्षितीशं यथापूर्वं भर्त्सयन्नास्त । एवं नवडिंभमरणदिष्टे दिष्टघटनया सुभद्रायां

द्वारकामागतायां विजयश्चागतः। स पार्थो विप्रविलापाक्रोशं श्रुत्वा दृष्ट्वा च, विदिताशेषोदन्तः, त्रिभुवनैकधनुर्धरवरमात्मानं साभिमानं मन्यमानोऽतिवेलावलेपलिप्तो, रामकृष्णादीन् धिक्कुर्वन्, क्षितिसुरस्याग्रतो विकत्थनमित्थं चक्रे।

"विराडिह न वर्तते द्विजसुतस्य संरक्षणे
"धनुर्धरवरो ह्यहं दशमसूतिकां पालये।
"मुधा भवति चेद्वचो ज्वलनसादहं स्यामि"ति
प्रतिश्रवमिहाकरोद् द्विजवरं समाधापयन्॥ ३९०॥

अथ भूसुरोऽब्रवीत्—

"यदीश्वरैरत्र न साधितं यतः
"त्वदीय-यत्नो नियतं मुधा भवेत्।
"अतीव घोरोऽत्र कृतः प्रतिश्रवः
"त्वदीयभार्याविषये दुनोम्यहम्"॥ ३९१॥

एवं स्फारशंकाकवलित-द्विजवरं प्रतिविकत्थनमेवं चक्रे पुनरपि—

"रामो नास्मि न माधवोऽस्मि न गदः प्रद्युम्न-साम्बौ न वा
"पार्थः क्षत्रशिखामणिस्त्रिभुवने वीराग्रणीर्धन्विनाम्।
"स्वर्लोके त्रिदशारिवारहनने प्राप्तार्धशक्रासनः
"शंभुस्त्रस्यति सव्यसाचिधनुषो गाण्डीवघोषाद्यमः"॥ ३९२॥

इत्थंप्रकारकात्मप्रशंसावचसा साकं सव्यसाची नैरंध्र-मान्द्रशर-पञ्जरं विरच्य, विप्रगृहमभितः प्रतिदिनं कृतान्तागमनं प्रतीक्षमाणो जागरूकः, स्वाङ्गेऽर्पितगुणबाणासनबाणपाणिरनिद्राणोऽतिष्ठत्। अचिरेण ब्राह्मणी दशमसुतमसूत। तत्क्षणमेव शिशोः शरीरमदृश्यतामगात्।

अयमत्र विशेषः पार्थकृत-शरपञ्जरादि-रक्षण-प्रयत्नस्य फलितार्थः यत्र शिशुदेहोऽपि नष्टोऽभवत् ।

दुःखाब्धिप्रवरः किरीटिनमगाद्गाण्डीवपाणिं शिशोः
संरक्षामनुकृत्य भर्त्सनपरः कत्कत्थनाजल्पनम् ।
निःशेषेण वदन्सुहेलनपरः साक्षाद्धरेः सन्निधौ
निन्दापूर्वमयुं तिरस्करणतो निस्तेजसं चाकरोत् ॥ ३९३ ॥

वितथीभूत-सान्द्रशरपञ्जरशंकितोऽपि कथंचिद्धार्यमाणधैर्यो धनञ्जयस्त्रिराचम्य शुचीभूय, भगवन्तं भर्ग प्रणम्य, गाण्डीवपाणिर्योगमायया संयमनीमुपगम्य तत्र संवर्तिनं विप्रपुत्रमप्राक्षीत् । तत्रानागतं तं विदन् पुरंदरपुरेऽपि तमप्राप्य, नैऋत-वारुण - वायवीय - कौबेरैशान्याग्नेय-पुटभेदनेषु चान्विष्य, व्यर्थप्रयत्नो वितथमनोरथो भूत्वा, बन्धुजनमध्ये मुखप्रकटन-विमुखः, शपथं सत्यं कर्तुं निश्चित्य, विजन-विपिने धनञ्जयं प्रज्वाल्य, तं त्रिः प्रदक्षिणं कृत्वा, प्रचुरतर-ज्वलाभाय कतिचन पदानि पश्चाद्गत्वा क्षणदिष्टं तूष्णीमतिष्ठत् । तदा तन्मनसि निजनिखिलपूर्ववृत्तं विद्युद्विद्योतनमिव प्रचकाशे ।

तदाऽर्जुनो निजगाद—

"जननि त्वामप्यहं ते बत दयितसुतः कालदोषात्त्यजामि
"प्रिय सौदर्यौ विजह्यां नियतिहतकृतिर्द्रौपदि त्वां च हृद्ये ।
"विजहामि त्वां सुभद्रे! कथमपि दयितां माद्रिसूनू च शस्तौ
"अपि तु त्यक्तुं हरे! त्वां कथय कथमहं शक्नुयां मे
सखायम्?" ॥ ३९४ ॥

अर्जुनोद्धार —

एवंविध - चिन्तातन्तुसन्तानदशासमुत्पन्न - कृष्णस्मरणो धनञ्जयो धनञ्जयं प्रत्यभिधानाय यावद् दक्षिणचरणं क्षोण्यां क्षिपति, तत्क्षणेनैव कृष्णोऽस्य पृष्ठभागे साक्षी सन्, दक्षिणपाणिं गृह्णन्, सर्वं ज्ञातवानपि किंचिदप्यजानन्निव निजगाद तमेवम्—

"विरम विजय जिष्णो ब्रूहि मे कः प्रयत्नः
"ज्वलन इह किमर्थं वृत्तमाख्याहि कृत्स्नम् ।
"श्रममिह तव बाढं सूचयत्यद्य वक्त्र
"विजय कथय सर्वं साध्वुया तेऽभिलापम्" ॥ ३९५ ॥

वैकुण्ठगमनम्—

कृष्णनामोच्चारणक्षणादिष्ट एव दृष्टिविषयीभूतं कृष्णं प्रियवयस्य-मीपल्लज्जयाऽपि प्रेमगौरव - कृतज्ञतादिभिः सार्धं सविस्मयः सहस्राक्षसुतो वृत्तान्तमशेषं तद्विवरणसहितं समावेदयत्सव्यसाची । कृष्णस्य तात्पर्यं तु पार्थदर्पप्रशमनमात्रं न, किंतु वैकुण्ठे परमपुरुषदर्शनं नरेण सह कर्तव्य-मिति पुरुषोत्तमप्रेरणानुसारमपि । अत एव विप्रपुत्रास्तत्र नीता यत्र पार्थयोगमाया न प्रभवति ।

अथ कृष्ण जिष्णू दारुकानीतं शैव्यसुग्रीव-मेघपुष्प-बलाहकाख्य-दिव्यहयवरयुक्तं दिव्यरथवरमारुह्य, सप्त सलिलनिधीन्, सप्त कुलाचलान्, सारचक्रमप्यतिक्रम्य, लोकालोकमन्धतमश्च प्रविश्य, सुदर्शनार्चिषा तं देश तेरतुः । अनन्तरमनन्तज्योतिःपुञ्जव्याप्त प्रदेशं विविशतुस्तौ यत्र पार्थो नेत्रोन्मीलनाक्षमः क्षणमिष्टं चक्षुषी पिदधे । तदनु तावत् प्राकृतभः

प्रविश्य देदीप्यमान-मणिमयमन्दिरं वैकुण्ठमिति विख्यातमद्राष्टां हृषीकेश-गुडाकेशौ।

तत्र—

सितवक्त्रं पुरुषोत्तमं फणिपतौ सान्द्राम्बुदाभं प्रभुं
मणिहारवनमालया च वलयैः केयूरकाञ्च्याश्चितम्।
हरिकौशेयधरं सुरत्नमुकुट-श्रीवत्सशोभाश्चितं
सनकाद्यैर्गरुडादिभिश्च पणितं दृष्ट्वा प्रणम्य स्थितौ॥ ३९६॥

अथ नर-नारायणौ साक्षाद्वीक्ष्य पुण्डरीकाक्षो भगवान् मधुर-गंभीरया भारत्या बभाषे चैवम्—

भूमेर्भरावतरणाय कलावतीर्णौ
द्रष्टुं युवां द्विजवरस्य सुतानहार्षम्।
तूर्णं सुरारिनिकर-प्रलयं विधाय
मत्सन्निधिं प्रति समाव्रजतं कृतार्थौ॥ ३९७॥

तथेत्युररीकृत्य, नर-नारायणौ भूमानं भगवन्तं प्रणम्य, विप्रपुत्रा-नूरीकृत्य, यथेतं द्वारकामागत्य, विप्रवराय दशापि पुत्रान् यथारूपं यथावयः प्रदाय, सर्वेषां हर्षप्रकर्षं सजोषमकार्ष्टाम्॥

वैकुण्ठे बहुविभवं समीक्ष्य पार्थो
भक्तिं चापि हृदि दृढामधत्त भूयः।
ये नृणां विभव-पराक्रमादयः स्युः
तान् सर्वान् भगवदनुग्रहान् स मेने॥ ३९८॥

निखिलविभवा गाण्डीवाद्या हरेः कृपयाऽभवन्
विपुलयशसां हेतुश्चासौ रणे विजयस्य च।

नकिमपि भवेत्स्वस्मादेवेति नाहमवेदिषं
तदिह मम संभूतं भूयो विकत्थन-कारणम् ॥ ३९९ ॥

किंच वैकुण्ठ-द्वारकावासिनोरैक्यमाज्ञाय ततः प्रभृति वयस्यं कृष्णं भक्त्या गौरवेण च बहुमेने ॥

यत्पादप्रवहत्पवित्रपयसा पोपूयते यः पुमान्
यत्कीर्तन्य-यशः-सुधां बहुतिथं श्रोत्रेण पेपीयते ।
यं ध्यायन् हृदये सुपूजनविधौ भक्त्या च संसेवते
निर्धूताखिल-कर्मबन्ध-निवहो विन्देत्स वै तत्पदम् ॥ ४०० ॥

एवं वैकुण्ठ-वीक्षण-विभूति-दर्शन-जात-नम्रतापन्नो दूरीकृत-दर्पाभिमानः फल्गुनस्तत्र कतिपय-दिनान्युषित्वा गजाह्वयं प्रत्यगमत् ॥

उद्धवप्रबोधनम्—

अन्तरंगतमो मन्त्री प्रार्थयद्धरिमुद्धवः ।
"शास्त्रसारतमं ज्ञानं कृपया शाधि मामि"ति ॥ ४०१ ॥

सूक्ष्मबुद्धिमतां श्रेष्ठं श्रेष्ठं सचिवसत्तमम् ।
सूक्ष्मतत्त्वग्रहे शक्तं मत्वा कृष्णः शशास तम् ॥ ४०२ ॥

"अमूलमेतद्बहुरूपरूपितं
मनो वचः प्राण-शरीर-कर्म ।
"ज्ञानासिनोपासनया शितेन
छित्वा मुनिर्गां विचरत्यतृष्णः ॥ (
XI, 28/17 ॥ ४०३ ॥

"यथा हिरण्यं स्वकृतं पुरस्ता-
त्पश्चाच्च सर्वस्य हिरण्मयस्य ।
"तदेव मध्ये व्यवहार्यमाणं
नानापदेशैरहमस्य तद्वत् ॥ XI, 28/19 ॥ ४०४ ॥

"करोति कर्म क्रियते च जन्तुः
केनाप्यसौ चोदित आनिपातात् ।
"न तत्र विद्वान् प्रकृतौ स्थितोऽपि
निवृत्ततृष्णः स्वसुखानुभूत्या ॥ XI, 28/30 ॥४०५ ॥

"एष स्वयंज्योतिरजोऽप्रमेयो
महानुभूतिः सकलानुभूतिः ।
"एकोऽद्वितीयो वचसां विरामे
येनेषिता वागसवश्चरन्ति ॥ XI, 28/35 ॥ ४०६ ॥

"कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन् ।
"मय्यर्पित-मनश्चित्तो मद्धर्मात्ममनोरतिः ॥ XI, 29/9॥४०७॥

"मामेव सर्वभूतेषु बहिरन्तरपावृतम् ।
"ईक्षेतात्मनि चात्मानं यथा खममलाशयः ॥ XI, 29/12॥
४०८ ॥

"इति सर्वाणि भूतानि मद्भावेन महाद्युते ।
"सभाजयन्मन्यमानो ज्ञानं केवलमाश्रितः ॥ XI, 29/13 ॥
४०९ ॥

"यावत्सर्वेषु भूतेषु मद्भावो नोपजायते ।
"तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः॥ XI,29/17॥४१०॥

"सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया ।
"परिपश्यन्नुपरमेत् सर्वतो मुक्तसंशयः ॥ XI, 29/18 ॥
४११ ॥

"अयं हि सर्वकल्पानां सध्रीचीनो मतो मम ।
"मद्भावः सर्वभूतेषु मनोवाक्कायवृत्तिभिः ॥ XI, 29/19 ॥
४१२ ॥

"मर्त्यो यदा त्यक्त-समस्तकर्मा
निवेदितात्मा विचिकीर्षितो मे ।
"तदाऽमृतत्वं प्रतिपद्यमानो
मयाऽऽत्मभूयाय च कल्पते वै" ॥ (भागवतम्)
XI, 29/34 ॥ ४१३ ॥

एवं श्रुत्वा भारतीं माधवीयां
ज्ञात्वा तत्त्वान्युद्धवः संप्रहृष्टः ।
नत्वा नत्वा पादयोः पुण्यकीर्ते-
र्ध्यात्वा ध्यात्वा तं शरण्यं प्रपेदे ॥ ४१४ ॥

सूक्ष्मज्ञानोपदेशेन मुक्तिमार्ग-प्रदर्शनात् ।
मेने स धन्यमात्मानं कृतकृत्यमिहावनौ ॥ ४१५ ॥

साक्षात्कृष्ण-पदांभोज-सेवनं तदनुग्रहम् ।
पूर्वपुण्यैरेव लब्धं मेने सुकृति-तत्त्वज्ञः ॥ ४१६ ॥

हरिः पश्यन् पृथ्वीमतिस्लुपितां दुष्टराजैर्भृशार्ता
अधर्मैर्व्याप्तां यः सदयहृदयो देवकीनन्दनोऽभूत् ।

· बहून् दुष्टान् हत्वा निरुपमबलस्सोऽनिशं शर्मदायी
विरक्तिज्ञानाढ्यां सुलभविधया बोधयामास भक्तिम् ॥४१७॥

वर्णानां निजधर्मसंस्थितिमजश्चक्रे स्वयं चाचरन्
इष्ट्वाऽनेकविधान् सवान् क्षितिसुरक्षेमं भृशं चातनोत् ।
युद्धे भारतनामकेऽसुरनृपध्वंसं सुधीः पाण्डवैः
कृष्णोऽचीकरदत्र पार्थमिषतो लोकान् स्वगीतामशात् ॥ ४१८ ॥

अमुष्मिंवं कृष्णे निवसति सति क्ष्माप्रकृष्टोर्वराऽभूत्
जनास्तुष्टिं पुष्टिं प्रचुरविभवं लेभिरे दीर्घमायुः ।
रुजा दैन्यं स्तेयं विविध-दुरितं नामतोऽप्यत्र नासीत्
विकुण्ठं धिक्कर्तुं क्षितिरिहमुहुर्भवविस्फूर्जिताऽभूत् ॥ ४१९ ॥

इति हरिजननाथैर्वीर्यविक्रान्तिपूर्णैः
चुरकुशलकृद्भिः प्राज्य-पापप्रहाणैः ।
तिपयहरिकृत्यैः कांचिदाप्नोमि तृप्तिं
म हृदय-सरोजे सर्वदा कृष्ण भूयाः ॥ ४२० ॥



॥ मम हृदयसरोजे सर्वदा कृष्ण भूयाः ॥



त्वद्वीर्याश्चर्यकृत्यातिशयपुरुकथास्वादतृष्णा पुपूर्पुः
वैयासिक्या प्रबन्धाचितचरितसुधापानसंभारविचः ।
वाग्धीवैदग्ध्यहीनोऽप्यखिलमविकलं सारतः कृष्णचंपूं
सुब्रह्मण्योऽर्पये ते पदसुमरचितां कृष्ण! मालाष्टमीं ताम् ॥

इति विविधरसाभिः पावनीभिः कथाभिः
सुपदविविधवृत्तैर्बद्धवाक्-पुष्पमालाः ।
तव सुरुचिरकण्ठे धारय प्रीतिपूर्वं
मम सुकृतमिदं स्यात् जन्मसाफल्यलाभः ॥ ४२२ ॥

स्वस्त्यस्तु सर्वलोकेभ्यो हरिभक्तिः समेधताम् ।
शान्तिस्तुष्टिश्च जीवानां भूयासुः शुभसंपदः ॥ ४२३ ॥

॥ इति शम् ॥





क्लींकारांभोधीशे कृष्णे व्रजकुलपुरसुखसुघने किरीटविभूषिते
केयूरालंकारोपेते मधुरतररुचिरवदने सदा मुनिवन्दिते ।
गोगोपीगोपालाराध्ये ममहृदयकमलदयिते ह्यमोघनिरंजने
मामेवाहं होप्या मीड्ये वसुदलपरिमलकुसुमे सुनिर्मलशान्तधीः॥ ४२४॥



# कृष्णोल्लासः



## वृत्त-समीक्षणा



## श्लोकानुक्रमणिका



NOTATIONS :—

1. श्लोका marked with an asterisk are quotations.

2. Column 1. indicates the serial number of the श्लोक as it appears in the text.

   ,, 2. gives the beginning of the first पाद of the श्लोक.

   ,, 3. gives the name of the वृत्त (with alternative names in brackets).

   ,, 4. gives the total number of syllables in each पाद of the श्लोक.

   ,, 5. gives the positions of the यति (pauses in each पाद).

   ,, 6. gives the गण *in their proper order in each* पाद.

3. The गण are as under —

   म = – – –   य = ∪ – –   र = – ∪ –   त = – – ∪

   ज = ∪ – ∪   स = ∪ ∪ –   भ = – ∪ ∪   न = ∪ ∪ ∪

   ल = ∪ (short)   ग = – (long)

# अ

| | | | | |
|---|---|---|---|---|
| 71 अग्नितप्तजन | रथोद्धता | (11) | (3,8) | र न र ल गु |
| 250 अग्रेपश्यामि* | स्रग्धरा | (21) | (7,7,7) | म र भ न य य य |
| 94 अङ्गुल्यग्रेण गोत्रं | चित्रमाला (सुवंशा) | (20) | (7,6,7) | म र भ न त त गु गु |
| 263 अचिरादिहैति | प्रमिताक्षरा | (12) | | स ज स स |
| 293 अतीव श्लाघ्यं | शिखरिणी | (17) | (6,11) | य म न स भ ल गु |
| 300 अथ तानुपदिश्य | उपचित्र | (11) | | स स स ल गु |
| 378 अथ हरिं स्वगृहं | बहुलाश्व: | (12) | | न भ र य |
| 12 अथाऽस्तीव रुष्टो | भुजङ्गप्रयातं | (12) | (6,6) | य य य य |
| 57 अथाग्रे वेणुं द्रोः | शिखरिणी | (17) | (6,11) | य म न स भ ल गु |
| 354 अनपेक्षः शुचिः* | अनुष्टुभ् | (8) | | |
| 360 अनुद्वेगकरं वाक्यं* | अनुष्टुभ् | (8) | | |
| 401 अन्तरङ्गतमो मन्त्री | अनुष्टुभ् | (8) | | |
| 314 अपि कुशलं ते सखे | चन्द्रप्रभा | (13) | (8,5) | न य ज र गु |
| 23 अब्दे पूर्णे यशोदा | चित्रमाला (सुवंशा) | (20) | (7,6,7) | म र भ न त त गु गु |
| 419 अमुर्ह्येवं कृष्णो | मेघविस्फूर्जित | (19) | (6,6,7) | य म न स र र गु |
| 403 अमूलमेतद्बहुरूप* | माला (उपजाति) | (11) | (5,6) | उ उ इ इ<br>ज त ज गु गु<br>त त ज गु गु |
| 412 अयं हि सर्व कल्पानां* | अनुष्टुभ् | (8) | | |
| 166 अयि भटपुरुषाः | कुपुरुषजनिता | (11) | | न न र गु गु |
| 66 अयि विरमत | उपमालिनी | (15) | | न न त भ र |

## आ

| | | | | |
|---|---|---|---|---|
| 230 आमन्त्र्य बान्धवान् | अनुष्टुभ् | (8) | | |
| 156 आयान्तौ तौ | ,, ,, | (8) | | |
| 55 आर्थिते पादपाः | धराधर | (21) | (7,7,7) | म र भ न य र र |
| 16 आवाभ्यां बहु | प्रहर्षिणी | (13) | (3,10) | म न ज र गु |
| 312 आसीत्कृष्णस्य | स्रग्धरा | (21) | (7,7,7) | म र भ न य य य |
| 389 आसीत्तदा द्विज | अनुष्टुभ् | (8) | | |
| 220 आसीत्तदा यदु | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 251 आसीत्तदा क्षिति | वसन्तवनिका | (15) | | त भ ज ज र |
| 231 आसीदशेषललना | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 13 आसीनस्तिष्ठन् | वैश्वदेवी | (12) | (5,7) | म म य य |
| 260 आसीन्महाबलि | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |

## इ

| | | | | |
|---|---|---|---|---|
| 422 इति विविध रसा | मालिनी | (15) | (8,7) | न न म य य |
| 409 इति सर्वाणिभूता* | अनुष्टुभ् | (8) | | |
| 420 इति हरिजननाद्यैः | मालिनी | (15) | (8,7) | न न म य य |
| 235 इदं श्रुत्वा रामः | शिखरिणी | (17) | (6,11) | य म न स भ ल गु |
| 290 इन्द्रप्रस्थे स्वजन | मन्दाक्रान्ता | (17) | (4,6,7) | म भ न त त गु गु |
| 86 इमे वृक्षाश्छाया | छाया | (19) | (6,6,7) | य म न स भ त गु |

## ई

| | | | | |
|---|---|---|---|---|
| 44 ईशावास्यमशेष | शार्दूल ललितं | (18) | (12,6) | म स ज स त स |
| 362 ईश्वरः सर्व* | अनुष्टुभ् | (8) | | |

## उ



## ऊ



## ऋ



## ए



## क

| | | | | | |
|---|---|---|---|---|---|
| 80 | कनक कपिशवासा | हरिः | (17) | (8,9) | न न म र स लगु |
| 53 | कमलाकर चित | हंसकं | (18) | | स न ज न भ स |
| 192 | करालः कालयवनो | अनुष्टुभ् | (8) | | |
| 160 | करास्फोटनं | हरनर्तनं | (18) | (8,5,5) | य स ज ज भ र |
| 405 | करोति कर्म क्रियते* | (उपजाति) ऋद्धिः | (11) | | उ इ उ उ,<br>इ=त त ज गु गु<br>उ=ज त ज गु गु |
| 332 | कर्मण्येवाधिकारस्ते* | अनुष्टुभ् | (8) | | |
| 2 | कलय कुशल पूरं | मालिनी | (15) | (8,7) | न न म य य |
| 202 | कल्ये चैद्य नृपः | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 282 | कल्ये चोत्थायकृष्णः | चित्रमाला (सुवंशा) | (20) | (7,6,7) | म र भ न त त गु गु |
| 346 | कविं पुराणमनुशासि* | (उपजाति)माला | (11) | | उ उ इ इ<br>त त ज गु गु<br>ज त ज गु गु |
| 203 | कस्तूरी तिलकांचितो | अनुष्टुभ् | (8) | | |
| 187 | कस्तूरीतिलकं लला* | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 361 | काम्यानां कर्माणां* | अनुष्टुभ् | (8) | | |
| 65 | कालीयः कालसर्पो | सुरसा | (19) | (7,7,5) | म र भ न य न गु |
| 375 | कालेऽस्मिन् मिथिला | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 91 | किमर्थं व्यर्थं भोः | चञ्चरिकावली | (13) | | य म र र गु |
| 320 | किमिहाहृतं तव | प्रमिताक्षरा | (12) | | स ज स स |
| 236 | किरीटी हस्त्याह्वे | सुधा | (18) | (6,6,6) | य म न स त स |
| 54 | कुटज-लिकुच-पनसैः | अरविन्दं | (18) | (9,9) | न न स स त य |

| | | | | | |
|---|---|---|---|---|---|
| 407 | कुर्यात्सर्वाणिकर्माणि* | अनुष्टुभ् | (8) | | |
| 384 | कृतज्ञोस्मि भृशं | „ „ | (8) | | |
| 145 | कृताकृत-विभूषणा | पृथ्वी | (17) | (8,9) | ज स ज स य ल गु |
| 281 | कृत्स्नं व्याप्य स्थितः | स्रग्धरा | (21) | (7,7,7) | म र भ न य य य |
| 212 | कृष्ण-वीर्यमविज्ञाय | अनुष्टुभ् | (8) | | |
| 208 | कृष्णस्यागमना | शार्दूलविक्रीडित | (19) | (12,7) | म स ज स त त गु |
| 322 | कृष्णस्य वीक्षण | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 381 | कृष्णं महामुनिगणं | „ „ | (14) | „ „ | „ „ „ |
| 291 | कृष्णं शारदचन्द्र * | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 128 | केशी नामक दैत्य | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स र र गु |
| 329 | केषांचिन्निर्धनानां | चित्रमाला (सुवंशा) | (20) | (7,6,7) | म र भ न त त गु गु |
| 134 | कंसप्रेष्योहमिति | चडं | (18) | (4,7,7) | म भ न ज भ र |
| 152 | कंसस्तन्निशि | एकरूप | (11) | | म स ज गु गु |
| 158 | क्रुद्धं दन्तिनमापतन्तं | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 143 | क्लींकारांभोधिरत्नं * | स्रग्धरा | (21) | (7,7,7) | म र भ न य य य |
| 124 | क्लींकारांभोनिधौ * | भुजङ्गविजृम्भितं | (26) | (8,11,7) | म म त न न न र- स ल गु |
| 1 | क्लीं कृष्णायेतिनित्यं* | स्रग्धरा | (21) | (7,7,7) | म र भ न य य य |
| 331 | क्लैब्यं मा स्म गमः * | अनुष्टुभ् | (8) | | |
| 153 | क्षणान्पतनघोरतः | रुचिरा | (17) | | ज स ज स र ल गु |

## ख

| | | | | | |
|---|---|---|---|---|---|
| 59 | खगाद्रिनिभोऽसुरः | पृथ्वी | (17) | (8,9) | ज स ज स य ल गु |

## ग

| | | | | |
|---|---|---|---|---|
| 25 गगनं समुद्रगिरयः | प्रमिताक्षरा | (12) | | स ज स स |
| 175 गत्वा गोकुलमुद्भव | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 132 गत्वा व्रजं सपदि | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 310 गदा प्रहरणात् | शिखण्डितम् (उपस्थितं) | (11) | | ज स त गु गु |
| 298 गदा प्रहरभीषणौ | पृथ्वी | (17) | (8,9) | ज स ज स य ल गु |
| 284 गन्धाद्यैःसुविलेपनैः | हरिणप्लुतं | (18) | (8,5,5) | म स ज ज भ र |
| 124 गृहीत वृषभाकृतिः | पृथ्वी | (17) | (8,9) | ज स ज स य ल गु |
| 226 गृह्णामीमां जीवमर्णां | अनुष्टुभ् | (8) | | |
| 51 गोपालं भूलीला * | मातृकासमकवृत्त | | | (30 मातृकाः प्रति पादे) |
| 135 गोप्यस्तदाकर्ण्य | इन्द्रवंशा | (12) | | त त ज र |
| 176 गोप्यः समीक्ष्य | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 366 गोप्यो हरिं नयन | ,, ,, | ,, | ,, | ,, ,, |
| 92 गोवर्धन शिखरो | कौशिकं | (17) | (9,8) | त न भ स न ल गु |
| 72 ग्रीष्मर्तौ भुवने | द्वीपिविक्रीडितं | (19) | (12,7) | म स ज स र र गु |

## च

| | | | | |
|---|---|---|---|---|
| 287 चन्दनोदक सेचनैः | (हरनर्तकं) मल्लिका | (18) | (8,5,5) | र स ज ज भ र |
| 109 चन्द्रो भैरिव मदकलः | मत्तेभक्रीडा | (20) | (13,7) | म न स न म य ल गु |
| 115 चरणं तव शरणं | हंसकं | (18) | | स न ज न भ स |

| | | | | |
|---|---|---|---|---|
| 163 चाणूराङ्गमपीडयत् | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 267 चित्रलेखे स्वरूपाणां | अनुष्टुभ् | (8) | | |
| 182 चेतना ज्ञास्तवैव | ,, | ,, | | |
| 305 चैद्य भूपवपुषः | स्वागता | (11) | (3,8) | र न भ गु गु |

## ज

| | | | | |
|---|---|---|---|---|
| 368 जगदवनसवाग्रये | उपमालिनी | (15) | (8,7) | न न त भ र |
| 394 जननि त्वामपि | महा स्रग्धरा | (22) | (8,7,7) | स त त न स र र गु |
| 15 जय जय जगदीश | उपमालिनी | (15) | (8,7) | न न त भ र |
| 372 ज्योतिषामुदरे | खेचरं | (19) | | र स स त ज ज गु |

## ज्ञ

| | | | | |
|---|---|---|---|---|
| 240 ज्ञात्वैवं माधवः | चित्रमाला(सुवंशा) | (20) | (7,6,7) | म र भ न त त गु गु |
| 341 ज्ञानविज्ञान वृत्ता * | अनुष्टुभ् | (8) | | |

## त

| | | | | |
|---|---|---|---|---|
| 75 तटिन् स्तनित संकुलैः | पृथ्वी | (17) | (8,9) | ज स ज स य ल गु |
| 376 तत्काल एव विषये | ललिता | (12) | | त भ ज र |
| 64 तथाभूतवत्मान् | भुजंगप्रयातं | (12) | (6,6) | य य य य |
| 191 तदनु कृष्णगिरा | द्रुतविलंबितं | (12) | | न भ भ र |
| 67 तदनु नर्तन नाट्य | अनवद्यं | (20) | (11,9) | न भ भ भ भ भ ल गु |
| 307 तदालोक्य | भुजङ्गप्रयातम् | (12) | (6,6) | य य य य |
| 205 तदा यामनेत्रं च | ,, | ,, | ,, | ,, |

| | | | | |
|---|---|---|---|---|
| 97 तनुजो न मे | प्रमिताक्षरा | (12) | (5,7) | स ज स स |
| 108 तव स्वामिन् | मेघविस्फूर्जिता | (19) | (6,6,7) | य म न स र र गु |
| 113 तवार्थे व्रज | हरनर्तनं | (18) | (8,5,5) | य स ज ज भ र |
| 359 तस्माच्छास्त्रं * | अनुष्टुभ् | (8) | | |
| 352 तस्मात्त्वमुत्तिष्ठ * | विषमवृत्तं | (11) | | |
| 345 तस्मात्सर्वेषु * | अनुष्टुभ् | (8) | | |
| 338 तस्मादज्ञान * | ,, | ,, | | |
| 268 तस्य रूपं विलिख्य | ,, | ,, | | |
| 367 तीर्थानि बिंबानि | उपजातिः (भद्रा) | (11) | | (इउइउ) त त ज गु गु, ज त ज गु गु |
| 374 तुष्टौ बले सुहृद | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 24 तृणावर्त दैत्यो | भुजंगप्रयातं | (12) | (6,6) | य य य य |
| 184 तं धर्ममब्रवीत् | अनुष्टुभ् | (8) | | |
| 36 त्रैलोक्याधः | स्रग्धरा | (21) | (7,7,7) | म र भ न य य य |
| 421 त्वद्वीर्याश्चर्ये | ,, | ,, | ,, | ,, |
| 43 त्वमात्मा जीवानां | कन्दर्पदर्प | (19) | (6,6,7) | य म न स त त गु |
| 181 त्वमेव बहुधा | अनुष्टुभ् | (8) | | |

## द

| | | | | |
|---|---|---|---|---|
| 144 ददर्श मथुरापुरीं | पृथ्वी | (17) | (8,9) | ज स ज स य ल गु |
| 102 दर्पं शक्रस्य | पुल्लदामा (पुष्पदामा) | (19) | (5,7,7) | म त न स र र गु |
| 89 दर्शनात् कीर्तनात् | स्रग्विणी | (12) | (6,6) | र र र र |
| 296 दशशतद्विप | द्रुतविलंबितं | (12) | | न भ भ र |

| | | | | |
|---|---|---|---|---|
| 261 दशशत भुजैः | हरिणी | (17) | (6,4,7) | न स म र स ल गु |
| 324 दासीजनैः | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 34 दितिजाधमं | मञ्जुभाषिणी | (13) | (5,8) | स ज स ज गु |
| 61 दिवि वधूषुः | तामरसं(ललितपदं) | (12) | (5,7) | न ज ज य |
| 70 दिव्य गन्धानुलिप्ता | अनुष्टुभ् | (8) | | |
| 393 दुःखाद्विप्रवरः | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 334 दुःखेष्वनुद्विग्न * | अनुष्टुभ् | (8) | | |
| 111 दुरितापहन् | गीतिका (प्रमदानना) | (20) | (5,5,5,5) | स ज ज भ र स ल गु |
| 195 दृष्ट्वाऽग्रतोऽथ | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 32 दृष्ट्वा तौ व्रजपथे | मातंगक्रीडा | (20) | (7,6,7) | म न र न म य ल गु |
| 101 दृष्ट्वा दृष्ट्वा | चित्रमाला(सुवंशा) | (20) | (7,6,7) | म र भ न त त गु गु |
| 280 दृष्ट्वा भार्यां | मन्दाक्रान्ता | (17) | (4,6,7) | म भ न त त गु गु |
| 219 दृष्ट्वा विष्णुं | स्रग्धरा | (21) | (7,7,7) | म र भ न य य य |
| 40 द्रुहिणोऽचिरात् | मञ्जुभाषिणी | (13) | | स ज स ज गु |
| 239 द्वारकां केशवः | चन्द्रकान्ता | (15) | | र र म य य |
| 377 द्वारस्थाः पुर | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 294 द्विजवेषं धरन्तः | अनुष्टुभ् | (8) | | |
| 155 द्विपं कुवलयापीडं | ,, | ,, | | |

## ध

| | | | | |
|---|---|---|---|---|
| 229 धनद इव | अनुष्टुभ् | (8) | | |
| 131 धनुर्यागः | मेघविस्फूर्जिता | (19) | (6,6,7) | य म न स र र गु |
| 246 धनुः सज्यं | शिखरिणी | (17) | (6,11) | य म न स भ ल गु |

| | | | | |
|---|---|---|---|---|
| 292 धर्मात्मा शमन | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 60 धेनुकानुयायिनः | तूणकं (शान्तिः) | (15) | (7,8) | र ज र ज र |

## न

| | | | | |
|---|---|---|---|---|
| 172 नन्दादि व्रजमित्र | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 171 न पीथो दत्तो वा | शिखरिणी | (17) | (6,11) | य म न स भ ल गु |
| 63 नभो मध्यभागं | भुजंगप्रयातं | (12) | (6,6) | य य य य |
| 256 नरकाहृत राज | (मनोज्ञा)<br>कालभारिणी | (11)<br>(12) | | स स ज गु गु<br>स भ र य |
| 69 नात्र स्थेयं त्वया सर्प | अनुष्टुभ् | (8) | | |
| 286 नानाभक्ष्य | ,, | ,, | | |
| 159 नाना विधाकलित | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 325 नाहं किंचिदवीविदं | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 399 निखिल विभवा | हरिणी | (17) | (6,4,7) | न स म र स ल गु |
| 262 निशम्य वचनं | पृथ्वी | (17) | (8,9) | ज स ज स य ल गु |
| 388 निशम्येमां | अनुष्टुभ् | (8) | | |
| 266 निशान्ते केचित् | ,, | ,, | | |
| 19 निशाम्य रूपं | वंशस्थविलं | (12) | (5,7) | ज त ज र |
| 217 नेदुर्भेरि पटह | मत्तेभक्रीडा | (20) | (13,7) | म न स न म य ल गु |
| 204 नेपथ्यांचित | द्वीपिविक्रीडितं | (19) | (12,7) | म स ज स र र गु |
| 339 नैव किंचित्करोमि * | अनुष्टुभ् | (8) | | |

## प

| | | | | |
|---|---|---|---|---|
| 306 पतने च तथा | कालभारिणी<br>(मनोज्ञा) | (11)<br>(12) | | स स ज गु गु<br>स भ र य |

| | | | | | |
|---|---|---|---|---|---|
| 348 | पत्रं पुष्पं फलं * | अनुष्टुभ् | (8) | | |
| 242 | पथि कृष्ण रथं | शृंग | (12) | | स स स य |
| 194 | पयोद सरणि | पृथ्वी | (17) | (8,9) | ज स ज स य ल गु |
| 77 | परं ब्रह्मेवेन्द्रस्य | शिखरिणी | (17) | (6,11) | य म न स भ ल गु |
| 103 | परात्परं परद्युति * | पञ्चचामर | (16) | (4,4,4,4) | ज र ज र ज गु |
| 7 | परित्राणाय साधू * | अनुष्टुभ् | (8) | | |
| 9 | परिमार्जनैः | गीतिका- (प्रमदानना) | (20) | (5,5,5,5) | स ज ज भ र स ल गु |
| 233 | पार्थः कापाय | स्रग्धरा | (21) | (7,7,7) | म र भ न य य य |
| 114 | पिकचंचु विपंचिका | शिखिनर्तन | (18) | (8,5,5) | स स ज ज भ र |
| 49 | पिच्छै र्गुच्छाभिः | पुष्छदामा (पुष्पदामा) | (19) | (5,7,7) | म त न स र र गु |
| 365 | पितुर्हननरोपतः | पृथ्वी | (17) | (8,9) | ज स ज स य ल गु |
| 104 | पुराणपुण्यपूरुषं * | पञ्चचामर | (16) | (8,8) | ज र ज र ज गु |
| 93 | पुरुहूत इदं | अतिशायिनी (चित्रलेखा) | (17) | (10,7) | स स ज भ ज गु गु |
| 58 | पुंसां पूर्वजनौ | शार्दूलविक्रीडित | (19) | (12,7) | म स ज स त त गु |
| 107 | पृथिव्यामेव | मत्तेभविक्रीडित | (20) | (13,7) | स भ र न म य ल गु |
| 74 | पृष्ठे रामं प्रलंबो | सुरसा | (19) | (7,7,5) | म र भ न य न गु |
| 122 | प्रगे भंग त्रितय | मणिमञ्जरी | (19) | (12,7) | य भ न य ज ज गु |
| 269 | प्रत्यंगं ध्रुवमेष | शार्दूलविक्रीडित | (19) | (12,7) | म स ज स त त गु |
| 317 | प्रथमो गुरुः | मञ्जुभाषिणी | (13) | | स ज स ज गु |
| 96 | प्रमोदाद्भूयिष्ठ | शिखरिणी | (17) | (6,11) | य म न स भ ल गु |
| 151 | प्रविश्य धनुषो | पृथ्वी | (17) | (8,9) | ज स ज स य ल गु |

| | | | | |
|---|---|---|---|---|
| 47 प्रहायैवाब्दनिद्रां | पुष्पमाला | (20) | (13,7) | य र भ न त त गु गु |
| 276 प्रह्लादाय वरं | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 316 प्रीतोऽस्मि यन्मम | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |

## फ

| | | | | |
|---|---|---|---|---|
| 136 फणीन्द्रं श्वेताभं | सुशोभा (मेघविस्फूर्जिता) | (20) | (6,7,7) | य म न न त त गु गु |
| 186 फुल्लेन्दीवरकान्ति * | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |

## ब

| | | | | |
|---|---|---|---|---|
| 35 बकाकारो दैत्यो | सुधा | (18) | (6,6,6) | य म न स त स |
| 265 बाणपुत्री ह्युषा | चन्द्रकान्ता | (15) | | र र म य य |
| 272 बाणो रोषविभीषणो | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 274 बाणः पञ्चशतेषु | " | " | " | " |
| 39 बालानां यादृशः | चित्रमाला(सुवंशा) | (20) | (7,6,7) | म र भ न त त गु गु |
| 297 बालोऽयं विजयो | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 38 बिभ्रद्वेणुं च हस्ते | स्रग्धरा | (21) | (7,7,7) | म र भ न य य य |
| 333 बुद्धियुक्तो जहाति * | अनुष्टुभ् | (8) | • | |
| 386 ब्राह्मणो जनुषा | हरनर्तक (मल्लिका) | (18) | (8,5,5) | र स ज ज भ र |

## भ

| | | | | |
|---|---|---|---|---|
| 148 भक्तिर्मे तव | शुद्धविराट्(कल्याणं) | (10) | | म स ज गु |
| 150 भगवत्स्पर्शनात् | अनुष्टुभ् | (8) | | |
| 154 भद्राद्याघोरणा | " | " | | |
| 179 भवभीतमुनीनां | " | " | | |

| | | | | |
|---|---|---|---|---|
| 225 भामां शस्तगुणो | अनुष्टुभ् | (8) | | |
| 301 भीमः पाकविधौ | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 125 भुवं दिदरिपन् | पृथ्वी | (17) | (8,9) | ज स ज स य ल गु |
| 382 भूदेवोऽथ हरिं | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 397 भूमेर्भरावतरणाय | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 90 भृशमनुतप्य | मृगेन्द्रमुखं | (13) | | न ज ज र गु |
| 73 भेकप्लुतै र्भ्रमण | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 340 भोक्तारं यज्ञ * | अनुष्टुभ् | (8) | | |

## म

| | | | | |
|---|---|---|---|---|
| 299 मगधेषु सुतं | मनोज्ञा (कालभारिणी) | (11) / (12) | | स स ज गु गु / स भ र य |
| 245 मद्राधिपस्य | वसन्तवनिका | (15) | | त भ ज ज र |
| 387 मद्रूपाणि चरा | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 350 मन्मना भव * | अनुष्टुभ् | (8) | | |
| 336 मयि सर्वाणि * | " | " | | |
| 413 मर्त्यो यदा त्यक्त * | बुद्धिः (उपजाति) | (11) | (इउउउ) | त त ज गु गु / ज त ज गु गु |
| 112 मल्लिका सुम | मल्लिका (हरनर्तकं) | (18) | (8,5,5) | र स ज ज भ र |
| 161 महानधर्मो | हसी (उपजाति) | (11) | (उइउइ) | त त ज गु गु / ज त ज गु गु |
| 189 महा समर | पृथ्वी | (17) | (8,9) | ज स ज स य ल गु |
| 129 महा हय वपुः | समुद्रलता | (19) | (8,4,7) | ज स ज स त भ गु |
| 42 महिम्नस्ते भूमन् | मकरन्दिका | (19) | (6,6,7) | य म न स ज ज गु |

| | | | | | |
|---|---|---|---|---|---|
| 22 | महीध्र सदृशं | पृथ्वी | (17) | (8,9) | जसजसयलगु |
| 277 | माधव पादपंकज | वंशपत्रपतितं | (17) | (10,7) | भरनभनलगु |
| 408 | मामेव सर्वभूतेषु * | अनुष्टुभ् | (8) | | |
| 141 | मार्गे हलि हरी | " | " | | |
| 357 | मां च योऽव्यभि * | " | " | | |
| 10 | मिष्टान्नैः फल भोज्य | शार्दूलविक्रीडितं | (19) | (12,7) | मसजसततगु |
| 216 | मिष्टान्नै भक्ष्य भोज्यै | स्रग्धरा | (21) | (7,7,7) | मरभनययय |
| 170 | मुदिता विबुधाः | कालभारिणी<br>(मनोज्ञा) | (11)<br>(12) | | स स ज गु गु<br>स भ र य |
| 311 | मुनिभिर्मनुजैः | तोटकं | (12) | (6,6) | स स स स |
| 253 | मुरोऽथ निरगात् | पृथ्वी | (17) | (8,9) | जसजसयलगु |
| 215 | मृष्टैः भृंगाटकाद्यैः | चित्रमाला (सुवंशा) | (20) | (7,6,7) | मरभनततगुगु |

## य

| | | | | | |
|---|---|---|---|---|---|
| 370 | यज्ञे शास्त्रोक्ते | विश्वा (बिंबं)(विभुः) | (19) | (5,7,7) | म तनसततगु |
| 349 | यत्करोपि * | अनुष्टुभ् | (8) | | |
| 400 | यत्पादप्रवहत् | शार्दूलविक्रीडितं | (19) | (12,7) | मसजसततगु |
| 177 | यथाकाशो वायौ | मेघविस्फूर्जिता | (19) | (6,6,7) | य म न स र र गु |
| 404 | पथा हिरण्यं * | हंसी (उपजाति) | (11) | (उइउइ) | त त ज गु गु<br>ज त ज गु गु |
| 347 | यदक्षरं वेद * | जाया | " | " (उउउइ) | " |
| 207 | यदा कात्यायनीं | अनुष्टुभ् | (8) | | |
| 196 | यदा त्वं पृथिवीं | " | " | | |
| ,, 6 | यदा यदा हि* | " | " | | |

## ल

| | | | | |
|---|---|---|---|---|
| 185 लोकानां क्षेम | चित्रमाला(सुवंशा) | (20) | (7,6,7) | मरभनततगुगु |

## व

| | | | | |
|---|---|---|---|---|
| 168 वचोऽपि निशमय्यिदं | पृथ्वी | (17) | (8,9) | जसजसयलगु |
| 37 वटुकान्वत्सयुतान् | मत्तेभविक्रीडितं | (20) | (13,7) | सभरनमयलगु |
| 224 वरं वीक्ष्य स्वयं | अनुष्टुभ् | (8) | | |
| 418 वर्णानां निजधर्म | शार्दूलविक्रीडितं | (19) | (12,7) | मसजसततगु |
| 315 वलाहकघटा | पृथ्वी | (17) | (8,9) | जसजसयलगु |
| 105 वसन्तचन्द्र भास्वरं* | पञ्चचामरं | (16) | (8,8) | ज र ज र ज गु |
| 199 वसुदेव सुतो | (मनोज्ञा)काल-भारिणी | (11) / (12) | | स स ज गु गु / स भ र य |
| 167 वसुदेवं हत | शुद्धमनोज्ञा | (12) | | स भ र य |
| 323 वित्तं याचितुं | शार्दूलविक्रीडितं | (19) | (12,7) | मसजसततगु |
| 173 विद्याभ्यासाय | चित्रमाला(सुवंशा) | (20) | (7,6,7) | मरभनततगुगु |
| 385 विप्रैते मुनय | प्रहर्षिणी | (13) | (3,10) | म न ज र गु |
| 95 विबुध पतिरथेदं | नाराचं (महामालिका) (सिंहविक्रीडित) (निशा) (नाराचकं) | (18) | (8,5,5) | न न र र र र |
| 395 विरम विजय | मालिनी | (15) | (8,7) | न न म य य |
| 213 विरम विरम | " | " | " | " |
| 390 विराडिह न वर्तते | पृथ्वी | (17) | (8,9) | जसजसयलगु |
| 33 विलोक्य विविधा | आर्या गीति | (12,20 मातृकाः) | | (जातिपद्यं) |
| 244 विवाह विधिना | अनुष्टुभ् | (8) | | |
| 17 विवृतानि कपाटानि | " | " | | |
| 285 विस्तीर्ण भोजना | " | " | | |

| | | | | |
|---|---|---|---|---|
| 82 विहगा वेणुरवं | मत्तेभविक्रीडित | (20) | (13,7) | सभरनमयलगु |
| 41 विहाय रूपं | वंशस्थविल | (12) | (5,7) | जतजर |
| 283 वीणा वेणु मृदङ्ग | शार्दूलविक्रीडित | (19) | (12,7) | मसजसततगु |
| 330 वृन्दारण्यग* | ” | ” | ” | ” |
| 52 वृन्दावन भुवि* | मातृकासमक (30 मात्रका प्रतिपादे) (जातिपद्य) | | | |
| 241 वृषभान्वीक्ष्य | मत्तेभविक्रीडित | (20) | (13,7) | सभरनमयलगु |
| 76 वेदाभ्यामपरा | शार्दूलविक्रीडित | (19) | (12,7) | मसजसततगु |
| 279 वेश्मान्तरे निज | वसन्ततिलका | (14) | (8,6) | तभजजगुगु |
| 398 वैकुण्ठे बहु विभवं | प्रहर्षिणी | (13) | (3,10) | मनजरगु |
| 130 व्योमासुरं कृष्ण | इन्द्रवंशा | (12) | (5,7) | ततजर |
| 119 व्रजजना हरिं | द्रुतविलंबित | (12) | | नभभर |
| 26 व्रजे बालः कृष्णः | शिखरिणी | (17) | (6,11) | यमनसभलगु |
| 21 व्रजे रामा रुचिर | कान्ता | (17) | (4,6,7) | यभनरसलगु |

## श

| | | | | |
|---|---|---|---|---|
| 99 शयानं शेषाङ्के | मेघविस्फूर्जिता | (19) | (6,6,7) | यमनसररगु |
| 78 शरत्काले प्रवृत्ते | पुष्पमाला | (20) | (13,7) | यरभनततगुगु |
| 165 शलं तदनु तोशलं | पृथ्वी | (17) | (8,9) | जसजसयलगु |
| 121 शंखचूड वधं | स्वागता | (11) | (3,8) | रनभगुगु |
| 106 शृंगारस्य सुजीविते | शार्दूलविक्रीडित | (19) | (12,7) | मसजसततगु |
| 56 श्रान्तं त्वां वीक्ष्य | चित्रमाला(सुवंशा) | (20) | (7,6,7) | मरभनततगुगु |
| 373 श्रान्तं श्रान्तमतीन | शार्दूलविक्रीडित | (19) | (12,7) | मसजसततगु |
| 308 श्रीकण्ठ तपसा | ” | ” | ” | ” |
| 313 श्रीकृष्णः खलु | प्रहर्षिणी | (13) | (3,10) | मनजरगु |

## स

| | | | | | |
|---|---|---|---|---|---|
| 45 | सर्वज्ञस्त्वं सर्वशक्तिः | शालिनी | (11) | (4,7) | म त त गु गु |
| 234 | सर्वज्ञो विजयाय | शार्दूलविक्रीडित | (19) | (12,7) | म स ज स त त गु |
| 363 | सर्वधर्मान्परित्यज्य* | अनुष्टुभ् | (8) | | |
| 342 | सर्वं भूतस्थमात्मानं* | ” | ” | | |
| 411 | सर्वं ब्रह्मात्मकं* | ” | ” | | |
| 5 | सर्वं रूपं स्थूल | शालिनी | (11) | (4,7) | म त त गु गु . |
| 358 | सर्वस्य चाहं हृदि* | इन्द्रवज्रा | (11) | | त त ज गु गु |
| 4 | सर्वं स्वामी चात्मा | आर्याणी | | | |
| 88 | सर्वेषामात्माहं | पुच्छदामा(पुष्पदामा) | (19) | (5,7,7) | म त न स र र गु |
| 380 | सर्वेषामन्तरात्मा | चित्रमाला(सुवंशा) | (20) | (7,6,7) | म र भ न त त गु गु |
| 193 | स विद्न्नारदगिरा | अनुष्टुभ् | (8) | | |
| 302 | सर्वोत्तमे परम | निरुपमा | (12) | | ज भ ज र |
| 169 | स सर्वदोद्विग्न | वंशस्थविलं | (12) | | ज त ज र |
| 147 | स सुष्ठु स्तुवते | अनुष्टुभ् | (8) | | |
| 295 | सहस्रगज | ” | ” | | |
| 258 | साधु भाषितं | चित्रा | (16) | | र ज र ज र गु |
| 48 | सायं यथार्थं | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 62 | सायं वत्सगणैः | हरिणप्लुत | (18) | (8,5,5) | म स ज ज भ र |
| 416 | साक्षात्कृष्ण | अनुष्टुभ् | (8) | | |
| 259 | सुन्दर्यः प्राप्य | सुरसा | (19) | (7,7,5) | म र भ न य न गु |
| 257 | सुरतरुनिकर | पुष्पिताग्रा | (12) / (13) | | न न र य / न ज ज र गु |

| | | | | |
|---|---|---|---|---|
| 364 सूर्योपराग | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 415 सूक्ष्मज्ञानोपदेशेन | अनुष्टुभ् | (8) | | |
| 402 सूक्ष्म बुद्धिमतां | " | " | | |
| 209 सौन्दर्यातिशयेन | द्वीपिविक्रीडितं | (19) | (12,7) | म स ज स र र गु |
| 84 संकल्पं भवतीभिः | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 164 संक्रुद्धो बलवक्षसि | द्वीपिविक्रीडितं | (19) | (12,7) | म स ज स र र गु |
| 396 स्मितवक्त्रं | मत्तेभविक्रीडितं | (20) | (13,7) | स भ र न म य ल गु |
| 223 स्यमन्तकं | अनुष्टुभ् | (8) | | |
| 46 स्रष्टं चराचर | वसन्ततिलका | (14) | (8,6) | त भ ज ज गु गु |
| 146 स्वभूः सुदाम | अनुष्टुभ् | (8) | | |
| 228 स्वमनोरथ | " | " | | |
| 423 स्वस्त्यस्तु | " | " | | |
| 371 स्वस्मात्स्रष्टा | स्रग्धरा | (21) | (7,7,7) | म र भ न य य य |
| 68 स्वामिन् विश्वं | मन्दाक्रान्ता | (17) | (4,6,7) | म भ न त त गु गु |

## ह

| | | | | |
|---|---|---|---|---|
| 11 हययुगे सति | द्रुतविलंबितं | (12) | | न भ भ र |
| 237 हरियुत विजयो | नाराचं(महामालिका) (सिंहविक्रीडितं) (निशा) (नाराचक) | (18) | (8,5,5) | न न र र र र |
| 254 हरिं दृष्ट्वा भीमः | कन्दर्पदर्प | (19) | - | य म न स त त गु |
| 87 हरिं बर्हापीडं | (मेघविस्फूर्जिता) सुशोभा | (20) | (6,7,7) | य म न न त त गु गु |
| 417 हरिः पश्यन् | मेघविस्फूर्जिता | (19) | (6,6,7) | य म न स र र गु |

| | | | | | |
|---|---|---|---|---|---|
| 123 | हरिः प्रस्थे तिष्ठन् | मकरन्दिका | (19) | (6,6,7) | य म न स ज ज गु |
| 120 | हरिर्भ्रात्रा सत्रा | सुशोभा<br>(मेघविस्फूर्जिता) | (20) | (6,7,7) | य म न न त त गु गु |
| 174 | हरिः सरामो | आर्द्रा (उपजाति) | (11) | (उइइउ) | त त ज गु गु<br>ज त ज गु गु |
| 190 | हरिः सैन्यं पश्यन् | मेघविस्फूर्जिता | (19) | (6,6,7) | य म न स र र गु |
| 126 | हरि रथादग तं | मत्तेभविक्रीडितं | (20) | (13,7) | स भ र न म य ल गु |
| 30 | हरिरेकदा फल | मणिव्रजं | (13) | | स ज ज ज गु |
| 118 | हरिरेत्य पदा | (मनोज्ञा)<br>कालभारिणी | (11)<br>(12) | | स स ज गु गु<br>स भ र य |
| 288 | हस्त्याह्वाय गतौ | शार्दूलविक्रीडित | (19) | (12,7) | म स ज स त त गु |
| 183 | हस्त्याह्वये पाण्डु | इन्द्रवंशा | (12) | (5,7) | त त ज र |
| 271 | हृदय दयितं | हरिणी | (17) | (6,4,7) | न स म र स ल गु |
| 83 | हेमन्ते समुपागते | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 139 | हृदान्तरहमद्राक्षं | अनुष्टुभ् | (8) | | |

## क्ष

| | | | | | |
|---|---|---|---|---|---|
| 138 | क्षेमार्थं जगतां | शार्दूलविक्रीडितं | (19) | (12,7) | म स ज स त त गु |
| 273 | क्ष्वेलाक्रन्दन | द्वीपिविक्रीडितं | (19) | (12,7) | म स ज स र र गु |



*N. B.*:—मनोज्ञा (कालभारिणी) and पुष्पिताग्रा are अर्धसमवृत्ताः. The figures and गणाः above the line refer to the 1st and 3rd पादाः and those below the line to the 2nd and 4th पादाः



यत्रैव यत्रैव मनो मदीयं
तत्रैव तत्रैव तव स्वरूपम् ।
यत्रैव यत्रैव शिरो मदीयं
तत्रैव तत्रैव पदद्वयं ते ।।

(शंकराचार्यकृतम्)

# कृष्णोल्लासः



## शुद्धाशुद्धपत्रिका

Introduction.

| पत्रं | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| 5 | 12 | respector: | respecter: |
| 5 | 14 | weilding | wielding |
| 9 | 9 | Immanance | Immanence |
| 22 | 2 | एको वंशी | एको वशी |
| 26 | 20 | Sacredotal | Sacerdotal |
| 36 | 13 | ndicates | indicates |
| 36 | 17 | प्राग्ज्योतिषपुर | शोणितपुर |
| 36 | 18 | The city of Light in the *East* | The city of Dawning Light in the *East* |
| 38 | 8 | Satya-Bhaama | Satya Bhaamaa |
| 50 | 28 | innoccuous | innocuous |

Text.

| पत्रं | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| 7 | 2 | मृतेऽस्ति | मृतेति |
| 7 | 17 | पोतमन्यन्यपरस्पद् | पोतमन्यन्त्यपरस्पद् |
| 11 | 7 | मध्नती | मध्नन्ती |
| 14 | 14 | नामधारिन् | नामधारी |

D

| पत्रं | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| 15 | 4 | कर्णिकेन | कर्णिकेव |
| 18 | 6 | भोक्तुमारेभिरे ॥ | भोक्तुमारेभिरे ते ॥ |
| 21 | 16 | भोक्तमारेभिरे | भोक्तुमारेभिरे |
| 25 | 4 | मत्पादान्तिक | मत्पादाङ्कित |
| 26 | 13 | संघघट्टी | संघट्टी |
| 27 | 4 | सच्चालितैः । | सञ्चालितैः । |
| 28 | 9 | कुसुमाङ्कुरैः | कुसुमाङ्कुरैः |
| 33 | 7 | सहरिश्चोद्धरन् | सहरिश्चोद्धरन् |
| 34 | 5 | विरुदेनाभिनिश्चति | विरुदेनाभियजति |
| 37 | 5 | शृङ्गारात्य | शृङ्गारस्य |
| 37 | 7 | श्रत्वा | श्रुत्वा |
| 39 | 7 | चक्रः | चक्रुः |
| 39 | 10 | तमभितुष्टवुरित्यम् | तमभितुष्टुवुरित्थम् |
| 39 | 22 | परिपूरयेत् | परिपूरयेः |
| 40 | 14 | कदंब्रिन्याः | कादंबिन्याः |
| 42 | 14 | जगौ । | जहौ । |
| 44 | 18 | निपाणोऽक्षिपत् | निपाणेऽक्षिपत् |
| 45 | 13 | स्पगोमनवना | स्पगोमनवनो |
| 49 | 13 | स्वगृहमगाद् ॥ | स्वगृहमगात् ॥ |
| 66 | 16 | रुक्मादय | रुक्म्यादयः |
| 73 | 1 | रुक्मिमी | रुक्मी |
| 73 | 9 | कल्पवृक्षेत्र | कल्पवृक्षेण |
| 77 | 3 | गदस्वान् । | मधूद्वान् । |

| पत्रे | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| 81 | 4 | स्रीकृते | स्रीकृत- |
| 81 | 17 | सजोषं | omit सजोषं |
| 90 | 7 | प्राज्य-ज्युष्टा | प्राज्य-जुष्टा |
| 99 | 19 | भूसुरेव | भूसुर इव |
| 101 | 4 | भूषण | विभूषण |
| 102 | 21 | ऋद्धाः | क्रुद्धाः |
| 103 | 2 | हरिस्तान् | हरिरतान् |
| 104 | 22 | नह्नि वरामेवं | निरुपमं दिव्यं |
| 110 | 20 | इथं | इत्थं |
| 112 | 6 | परमाद्भत | परमाद्भुत |
| 113 | 2 | सो भूत्वा | स भूत्वा |
| 118 | 1 | मयैवैते | मयैवैते |
| 118 | 9 | सभ | समं |
| 122 | 1 | इत्यमादिष्टो | इत्यमादिष्ट |
| 124 | 14 | मातृतृप्त्यै ॥ | मातृतृप्त्यै " ॥ |



स एव काले भुवनस्य गोप्ता
विश्वाधिपः सर्वभूतेषु गूढः ।
यस्मिन्युक्ता ब्रह्मर्षयो देवताश्च
तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥ श्वे ॥

# ॥ कृष्णोल्लासः ॥

## परिभापा (Abbreviations)

| | | |
|---|---|---|
| भ. गी | — | श्रीमद्भगवद्गीता |
| भा | — | श्रीमद्भागवतमहापुराणम् |
| श्वे | — | श्वेताश्वतरोपनिपत् |
| के | — | केनोपनिपत् |
| मुं | — | मुण्डकोपनिपत् |
| म. ना | — | महानारायणोपनिपत् |
| क | — | कठोपनिपत् |
| बृ | — | बृहदारण्यकोपनिपत् |
| तै | — | तैत्तिरीयोपनिपत् |
| सौ. ल | — | सौन्दर्यलहरी |
| ऋ | — | ऋग्वेदः |
| ई | — | ईशवास्योपनिपत् |
| छां | — | छान्दोग्योपनिपत् |
| गायत्री | — | विश्वामित्रऋपेः — (वेदान्तर्गता) |
| मां | — | माण्डूक्योपनिपत् |
| कृ | — | कृष्णोल्लासः |
| ध्यानबिन्दु | — | ध्यानबिन्दूपनिपत् |

